पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन 'आदर्शशोधसंस्थानम्' इति सम्मानितम्




# षड्दर्शनसारः



सम्पादकौ

डा. ए.वि. नागसम्पिगे
निदेशकः

डा. शङ्करनारायण अडिगः
उपनिदेशकः

पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन 'आदर्शशोधसंस्थानम्' इति सम्मानितम्

# षड्दर्शनसारः

सम्पादकौ

डा. ए.वि. नागसम्पिगे
निदेशकः

डा. शङ्करनारायण अडिगः
उपनिदेशकः

पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०१२

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – ९८

# षड्दर्शनसारः

ISBN : 978-93-81275-16-0

सम्पादकः

डा. ए.वि. नागसम्पिगे तथा डा. शङ्करनारायण अडिगः

प्रकाशनम् -

पूर्णप्रज्ञसंशोधनमन्दिरम्

पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन् रोड्, बेङ्गलूरु - २८

| | |
|---|---|
| पुटानि | : १० + १४६ |
| प्रथममुद्रणम् | : २०१२ |
| मुद्रितपुस्तकसङ्ख्या | : १००० |
| मूल्यम् | : १०० रूप्यकाणि |
| मुद्रणालयः | : लावण्य मुद्रणम्, बेङ्गलूरु |

**Poornaprajna Samshodhana Mandiram**
Recognised as 'Adarsha Shodha Sansthan'
by Rashtriya Sanskrit Sansthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# ṢAD-DARŚANASĀRAḤ

*Edited by*

**Dr. A.V. Nagasampige** — Director,
**Dr. Shankaranarayana Adiga** — Dy. Director,
Poornaprajna Samshodhana Mandiram, Bangalore

*Published by*
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

2012

Poornaprajna Samshodhana Mandira Granthamālā - 98

# ṢAD-DARŚANASĀRAḤ

ISBN : 978-93-81275-16-0

*Edited by* **Dr. A.V. Nagasampige**
**& Dr. Shankaranarayana Adiga**

Published by **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Samsthan,
(Deemed University),
New Delhi**

First Edition : 2012

Copies : 1000

**Price : Rs. 100/-**

Pages : 10 +146

*Printed by :*
**LAVANYA MUDRANA,** Bangalore-560 050
Ph. 26610563

# अनुग्रहसन्देशः

'शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।
स एव सर्वशास्त्रज्ञः यस्य शान्तं मनः सदा ॥'

इति भगवद्व्यासोक्तदिशा सर्वाण्यपि शास्त्राणि समाजे नैतिक-धार्मिकमौल्यसमुज्जीवनद्वारा तत्त्वज्ञानमुक्ती दापयितुं प्रवृत्तानि । 'सर्वे जनाः सुखिनो भवन्तु', 'सर्वत्र शान्तिरस्तु' इतीमां दृष्टिमवलम्ब्यैव शास्त्राणां प्रवृत्तिः । सत्यान्वेषणार्थं प्रवृत्तानां शास्त्राणाम्, ग्रन्थप्रणेतॄणां चासाधारणं दायित्वमस्माभिः सकार्तज्ञं स्मर्तव्यमित्यत्र न सन्देहगन्धः ।

केचन व्याचक्षते- 'सर्वाणि शास्त्राणि एकमेव तत्त्वं भङ्ग्यन्तरेण भाषाभेदेन च निरूपयन्ति । सर्वेषामपि शास्त्रकाराणां ग्रन्थेष्वापाततः विरोधो प्रतीयते । विचार्यमाणे तु एकमेव तत्त्वं प्रतिपादितम्' इति । एतन्न वास्तवं नापि मनोरममिति मन्यामहे ।

शास्त्रेषु विहितभूरिपरिश्रमाणां विदुषां तु नैतदतिरोहितं यत् सर्वे दार्शनिकाः स्वीयदर्शनस्य सामञ्जस्यं परदर्शनानां समेषामसामञ्जस्यं च निपुणतरमुपपादयन्तीति । सर्वेषां दर्शनानामेकस्मिन्नर्थे तात्पर्यसद्भावे कथमियं विमर्शप्रक्रिया भवितुमर्हति? तस्मात् सर्वैर्दार्शनिकैः प्रतिपादितं तत्त्वमेकमेव तत्र विरोधवार्तैव नास्तीति तु रिक्तं वचः । एतावत्तु परमादरेणाङ्गीकरणीयं यत्, सर्वे सत्यान्वेषणकर्मणि बद्धादरा आचार्या अस्मदादरभाजः न कदापि विस्मरणमर्हन्तीति । विरुद्धाः सर्वेऽभिप्रायाः न समन्वययोग्या इति तत्त्वमस्माभिः प्रयत्नेनात्मसात्कर्तव्यमिति । सत्यं तु एकरूपमेव ।

तदेवं सत्यान्वेषणमार्गे जिगमिषूणां सतां तत्तद्दर्शनप्रमाणप्रमेय-स्वरूपपरिचयार्थं ग्रन्थरत्नमिदमुपायनीकृतम् । तत्तद्दर्शनमर्मज्ञाः विद्वांसः शोधप्रबन्धान् समर्पितवन्तः । सर्वेषां शोधप्रबन्धदातॄणां विद्वज्जनानां ज्ञानाभिवर्धनेन भगवान् कृष्णः समनुगृह्णात्वित्याशास्महे ।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**
**श्रीपेजावर-अधोक्षजमठः, उडुपि**

# निदेशकवचांसि

२०११तमे क्रैस्तवत्सरे पूर्णप्रज्ञसंशोधनमन्दिरे विवेकचूडामणि-सिद्धान्तमुक्तावलीकार्यशाला समायोजिताऽऽसीत् । राष्ट्रियसंस्कृत-संस्थानस्य कुलपतिचराः, अधुना सोमनाथसंस्कृतविश्वविद्यालय-कुलपतिपदम् अलङ्कुर्वाणाः श्रीमन्तः कुटुम्बशास्त्रिणः, विद्वान् अनन्तशर्मा भुवनगिरिः, तथा विद्वान् वि. सुब्रह्मण्यभट्ट इत्येते विवेकचूडामणिमपाठयन् । तथैव विद्वत्प्रवराः डि. प्रह्लादाचार्याः, प्रा. हरिदासभट्टाः, प्रा. रामकृष्णशास्त्रिणश्च सिद्धान्तमुक्तावल्यां शब्दखण्डं चापाठयन् । पञ्चाशदधिकाः विद्यार्थिनः समग्रादपि देशात् समुपस्थिताः कार्यशालायामस्यां स्वीकृतभागाः निर्मलं विज्ञानमापुः । अस्मिन्नेव सन्दर्भे षड्दर्शनप्रमाणप्रमेयपरिचयात्मकाः विशिष्टोपन्यासाः पूर्णप्रज्ञ-संशोधनमन्दिरेण समायोजिताः । तेषां सारसङ्ग्रहोऽत्र विदुषां विद्यार्थिनां चाध्ययनसौकर्यार्थं सङ्गृहीतः । तत्तच्छास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः शोधलेखनप्रदानेनास्मान् अन्वगृह्णन्निति तेभ्यः वन्दनानि समर्पये । समेषामस्माकं गुरवः संशोधनमन्दिरस्य संस्थापकाध्यक्षाः, उडुपि-श्रीपेजावरमठाधीशाः श्रीमद्विश्वेशतीर्थस्वामिपादाः मार्गदर्शनेनास्मान् अन्वगृह्णन् । तेभ्यः सभक्तिश्रद्धं प्रणतिततिभिरेव केवलाभिः कार्तज्ञं व्याहरामः ।

देशे विदेशे स्वीयप्रतिभया विश्रुतकीर्तयः राष्ट्रियसंस्कृतसंस्थानस्य लालबहादूरशास्त्रीसंस्कृतविद्यालयस्य च कुलपतिपदमलङ्कुर्वाणाः श्रीमन्तः राधावल्लभत्रिपाठिमहाभागाः सन्दर्भेऽस्मिन् परमादरेण स्मर्यन्ते । विद्वत्सु निर्व्याजा निरतिशया च प्रीतिः सर्वदा तैः प्रकाश्यत इति सामोदं निवेदयामः । विशिष्यास्माकं पूर्णप्रज्ञसंशोधनमन्दिरे प्रकाशितान् ग्रन्थान्

दृष्ट्वा ते प्रीत्यतिशयेनास्मान् शोधकर्मणि मार्गदर्शनेनान्वगृह्णन् । तथैव प्रशासनकर्मणि कुशला अद्वैतवेदान्तनदीष्णाः राष्ट्रियसंस्कृतसंस्थान-कुलसचिवाः श्रीमन्तः प्रा. सुब्बरायुडुमहाभागाः, आदर्शयोजना-विभागमुख्याः विद्वद्धौरेयाः डा. प्रकाशपाण्डेयमहोदया अपि अस्मासु कृपातिशयवन्तः मार्गदर्शनेन सदाऽस्मान् प्रीणयन्ति, तेभ्यः वन्दनानि समर्पयामः । शोधसंस्थानस्यास्य प्रतनाध्यक्षाः विद्वद्धौरेयाः श्रीमन्तः हयवदनपुराणिकमहाभागाः, विद्वत्तल्लजाः श्रीमन्तः डि. प्रह्लादाचार्याश्च परमादरेण स्मर्यन्ते ।

**डा. ए.वि. नागसम्पिगे**

निदेशकः

# विषयानुक्रमणिका


| | |
|---|---|
| साङ्ख्यदर्शनम् | १-८ |
| योगशास्त्रस्य प्रधानग्रन्थकाराः | ९-२० |
| न्यायदर्शनम् | २१-४७ |
| वैशेषिकदर्शनम् | ४८-७८ |
| मीमांसाशास्त्रपरिचयः | ७९-१०२ |
| अद्वैतदर्शनम् | १०३-११६ |
| विशिष्टाद्वैतदर्शनम् | ११७-१३३ |
| द्वैतदर्शनम् | १३४-१४४ |

# षड्दर्शनसारः

## साङ्ख्यदर्शनम्

-डा. के. विश्वनाथशास्त्री

सुविदितमेव एतत् यत् जगत् सर्वं दुःखपङ्कनिमग्नम् उद्दिधीर्षवः परमकारुणिकाः महानुभावा ऋषयः तत्कल्पाः च दुःखनिवृत्त्युपायं विज्ञापयितुं तत्तद्दर्शनम् अनुसृत्य उपदेशप्रकारमाश्रयन्त इति । एतेषां यद्यपि परस्परं मतभेदः समुपलक्ष्यते । तथाऽपि दुःखकारणविषये सर्वेषां एषां सम्प्रतिपत्तिमेव पश्यामः । स च दुःखहेतुः मिथ्याज्ञानं एव । तदपनोदनाय समीचीनं दर्शनं अपेक्षितम् इत्यपि अंशे सर्वे सम्प्रतिपद्यन्त एव । एतादृशं समीचीनं दर्शनं सम्पादयितुं परमर्षिणा कपिलेन प्रवर्तितं दर्शनमेव साङ्ख्यदर्शनम् । इदञ्च शिष्टैः परिगृहीतं बहुभिः सत्स्वपि विप्रतिपत्तिषु बह्वीषु इति अस्य वैशिष्ट्यम् । एवं सत्कार्यवादादि-व्यपाश्रयेणापि अस्य समीचीनख्यातिजनकत्वं प्रसिद्धं शिष्टेषु ।

अस्य दर्शनस्य आद्यः प्रवर्तकः कपिलाचार्यः । अयञ्च सर्वज्ञः इति श्वेताश्वतरे प्रदर्शितः । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैः बिभर्ति जायमानं च'[1] इति मन्त्रेण जातमात्रः एव अयमीश्वरप्रसादात् सर्वज्ञः बभूव इति अर्थवाचिना । यद्यपि इदानीमुपलभ्यमानानि कापिलानि सूत्राणि अनेनैव कृतानि इति सम्यक् दृढीकर्तुं न शक्यते, तथाऽपि अस्य

आद्यप्रवर्तकत्वं परम् अविवादम् । तस्य परम्परायां एव आसुर्यादयः महानुभावाः एतस्य दर्शनस्य विस्तारयितारः तत्र तत्र उट्टङ्क्यन्ते केवलं तेषां ग्रन्थान् परं नोपलभामहे अद्यत्वे ।

साङ्ख्यदर्शनस्य इदानीं काले द्वौ ग्रन्थौ प्रसिद्धौ वर्तेते । एकस्तु ईश्वरकृष्णेन रचिताः कारिकाः इति व्याख्येयो ग्रन्थः, अपरा च पदवाक्यप्रमाणज्ञेन वाचस्पतिमिश्रेण रचिता साङ्ख्यतत्वकौमुदी इति व्याख्या । आभ्यामेव ग्रन्थाभ्यां प्रकृते साङ्ख्यदर्शनस्य परिचयः सम्पाद्यो भवति । कौमुदीव्याख्यानानि च द्वित्राणि पञ्चषाणि वा सन्ति प्रामाणिकानि ।

अस्य दर्शनस्य सामान्यतः परिचयः इत्थं कर्तुं शक्यते यत्-

एतस्मिन् दर्शने कार्यं - कारणम्- अनुभयात्मकं चेतनम् इति त्रिविधं तत्वं सङ्क्षेपतः । तत्र कार्यं बहुप्रपञ्चं जगत् व्यक्तमिति सञ्ज्ञितं लौकिकप्रसिद्धमेव – परीक्षकैः महत्तत्वम्- अहङ्कारः पञ्चतन्मात्राणि- पञ्चमहाभूतानि एकादश इन्द्रियाणि इति प्रविभक्तम् । कारणं च एतेषां सर्वेषां परममूलं अव्यक्तं प्रधानं प्रकृतिरिति शब्दितं व्यक्तद्वारा अनुमेयम् । इमे द्वे अपि व्यक्ताव्यक्ते जडे एव । कार्यकारणभावात् । कार्यं हि जगद् जडात्मतया गृह्यमाणं कारणमपि तादृशमेव अनुमापयति । अतः युक्तं कार्यकारणभावात् उभयोः अचेतनत्वम् ।

एताभ्याम् अत्यन्तं विलक्षणः कार्यकारणकोटावनन्तर्भूतः अत एव चेतनः पुरुषः शुद्धः निरतिशयः केवलः साक्षी इति प्रसिद्धः श्रुतिषु इति तृतीयं तत्वम् ।

अयञ्च पुरुषः चिच्छक्तियुक्तः प्रकृतिकृतबुद्ध्या कृतां सर्वां कृतिं

आत्मीयां मन्यते । तत्र कारणं मिथ्याज्ञानमेव । बुद्धौ अहमभिमानी अयं पुरुषः बुद्ध्या अथवा तद्रूपया प्रकृत्या वा कृतं सर्वम् आत्मकृतं मन्यते । तेन सुखदुःखादिमान् भवति सोऽयमस्य संसारः ।

यदा पुनरयमात्मानं प्रकृतितः अव्यक्तात् कार्यतः व्यक्ताद् भिन्नं सः जानाति अयमस्य मोक्षः । न तु वैदिकेन लौकिकेन वा कर्मणा जायमानः सुखलवविशेषः । तत्र दुःखसंस्पर्शात् । तदुक्तं कारिकायाम्-

'दृष्टवत् आनुश्रविकः स हि अविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥'[२] इति ।

लौकिकेन कर्मणा मोक्षो न भवति इति तावत् सिद्धमेव । तस्य दुःखहेत्वन्तर्भावात् । वैदिकमपि कर्म अत एव मोक्षहेतुः न । मोक्षश्च प्रकृतिपुरुषान्यताख्यात्या व्यक्ताव्यक्तज्ञविज्ञानशब्दितया भवति इति कारिकार्थः । एतादृश एव मोक्षः दुःखात्यन्तनिवृत्तिरूपः परमः पुरुषार्थ इति च ।

अयञ्च मोक्षः दुःखनिवृत्तिरूपत्वाद् एव ज्ञानेन साध्य अपि नित्य इष्यते । जन्यस्य भावस्यैव अनित्यत्वात् । एतेन मोक्षस्य नित्यदुःखध्वंसरूपता सिद्धा भवति । विवेकविज्ञानपर्यन्तमेव कारणप्रवृत्तेः सम्भवात् दुःखस्य पुनरावृत्तिशङ्का अपि नास्ति सङ्क्षेपेण उक्तोऽयं प्रमेयः विस्तरेण निरूपितः तत्र तत्र । प्रमेयसिद्धेः प्रमाणाधीनत्वात् प्रमाणानि कियन्ति साङ्ख्यदर्शने ? कानि च तानि? कानि नु तेषां लक्षणानि इत्येतादृशेषु संशयेषु सत्सु कारिकायामभिहितम् ।

**'दृष्टम् अनुमानम् आप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।**
**त्रिविधं प्रमाणम् इष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥'**[३] इति ।

अनेन प्रत्यक्षम्, अनुमानम्, शब्द इति प्रमाणत्रयमेव साङ्ख्यदर्शने। अन्यानि प्रमाणानि अत्रैव अन्तर्भवन्ति इति प्रदर्शितं भवति। तत्र च प्रमायाः करणं प्रमाणं इति सर्वतान्त्रिकसिद्धम्। प्रमा नाम 'असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः बोधश्च पौरुषेयं फलं प्रमा' इति वाचस्पत्युक्तेः अन्तःकरणवृत्तिप्रतिबिम्बिता चित् प्रमा इत्युच्यते। तस्याः आश्रयभूतो वृत्तिविशेषः प्रमाणम् इति वक्तव्यमिति गम्यते। परन्तु प्रसिद्धेन चक्षुरादिकरणेन जाता इयं वृत्तिः प्रमा इत्यपि वक्तुं शक्यते अतः उभयविधव्यवहारः तत्र तत्र उपपद्यते। लौकिकानां व्यवहारस्तु बुद्धिवृत्तौ प्रमात्वेन तत्साधने करणे प्रमाणत्वेन अस्ति। सः अस्मिन् दर्शने न निषिध्यते। प्रमाणानि च प्रत्यक्षम्- इन्द्रियाणि पञ्चविधानि सर्वतान्त्रिकप्रसिद्धानि। अनुमानं - व्याप्तिपक्षधर्मतयोः ज्ञानम् इदञ्च न्यायसूत्रोक्तरीत्या पूर्ववत् - शेषवत् - सामान्यतो दृष्टञ्चेति त्रिविधम्। यद्वा वीतमवीतञ्च इति द्विविधम्। तत्र वीतमन्वयमुखेन प्रवर्तमानं पूर्ववत् सामान्यतो दृष्टम् इति द्विविधम्। अवीतं व्यतिरेकमुखेन प्रवर्तमानं शेषवत् इति एकविधम् इत्यपि विभागः सुकरः।

शब्दः अपि प्रमाणम्। इदमपौरुषेयं वेदवाक्यं प्रमाणम्। जैमिनीयानामिव साङ्ख्यानामपि मते ईश्वरस्य अभावात् तत्कृतत्वेन तदुपदिष्टत्वेन वा वेदस्य प्रामाण्यासम्भवात्। अपि तु अपौरुषेयत्वेन सकलदोषशङ्काविनिर्मुक्तत्वात् स्वतःप्रमाणं वेदवाक्यम्। तदनुसारीणि वाक्यानि इतिहास-पुराणादीनां स्मृत्यादीनां च प्रमाणानि। कापिलमपि वाक्यं वेदानुसारित्वात् एव प्रमाणम्।

इत अन्यानि यानि प्रमाणानि तन्त्रान्तरसिद्धानि उपमानार्था-

पत्त्यादीनि तानि अत्रैव त्रिषु अन्तर्भवन्ति इति कृत्वा त्रीण्येव प्रमाणानि इति सिद्धम् ।

एभिः प्रमाणैः प्रमेयसिद्धिः भवति । स च बहुविधः कार्यप्रपञ्चः प्रमेयः प्रत्यक्षसिद्धः । तत्कारणं च अनुमानसिद्धम् । तद्विलक्षणः चेतन आत्मा परं सङ्घातपरार्थत्वलिङ्गेन अनुमानेन 'आत्मा वा अरे द्रष्टव्यः प्रकृतितः विवेक्तव्यः इत्यादिना आगमेन च प्रमेयः इति प्रमेयसिद्धिः प्रमाणात् भवति ।

तत्रापि कार्यकारणभावविषये अनुमानं मुख्यं प्रमाणं भवति । तेन प्रमाणेन विश्वसृष्टिः ईदृशी अनुमातुं शक्यते कार्यं च इदं सुखदुःख-मोहात्मकतया प्रीतिपरितापविषादहेतुतया च उपलभ्यमानं कारणमपि तादृशमनुमापयति । तच्च कारणं मूलप्रकृतिः । यत अन्या प्रकृतिर्नास्ति सा मूलप्रकृतिः । तस्याः सकाशात् महत्तत्वम् इति तत्त्वं जायते । तस्माद् अहङ्कारः । तस्मात् शब्द-स्पर्श-रूप-रस-गन्धतन्मात्राणि सूक्ष्मभूत-सञ्ज्ञितानि उत्पद्यन्ते । तेभ्यश्च स्थूलानि पञ्चमहाभूतानि आकाशः - वायुः - तेज आपः पृथिवी इति एकद्वित्रि-चतुःपञ्चगुणानि जायन्ते । तेभ्यः भौतिकानि इन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनः,अन्तःकरणम् इति जायन्ते । अयं सर्वः अपि साक्षात् परम्परया वा प्रकृतिकार्यभूतः इति कृत्वा त्रयाणां सत्वरजस्तमसां गुणानां वा तत्फलानां सुखदुःखमोहानां प्रीतिपरितापविषादानां वा कार्येषु भानम् । प्रकृतेः धर्माणां कार्येऽनुप्रवेशात् । कार्यकारणयोः तादात्म्यात् ।

सत्कार्यवादाभ्युपगमात् । तदुक्तं कारिकायाम्- 'प्रकृतेः महान् महतः अहङ्कारः तस्मात् गणश्च षोडशकः तस्मादु अपि षोडशकाद् पञ्चभ्यः पञ्चभूतानि ।'[४] इत्यादिना ।

न चात्र प्राणानां गणना नास्ति इति शङ्कनीयम्। एकैकस्य इन्द्रियस्य एकैकः व्यापारः यथा तथैव सर्वेषां इन्द्रियाणाम् एकः व्यापारः स एव प्राणः इत्युच्यते ।

'सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च'[५] इति प्रसिद्धेः ।

ततश्च विश्वस्य सृष्टिः प्रकृतिद्वारा इति सिद्धम् । साऽपि सृष्टिः तद्विपरीतस्य पुरुषस्य भोगार्थं भवति । सङ्घातस्य सर्वस्यापि असंहत-परार्थत्वात् भूतभौतिकसङ्घातस्यापि तथैव उचितत्वात्। न चात्र प्रेरकः कः इति शङ्कनीयम्। प्रकृतेरेव स्वयं प्रवृत्तेः। 'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिः अज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य'[६] इति न्यायात् । अनेन च संसारभोगे इव मोक्षे अपि प्रधानस्यैव कारणत्वम् इत्यागतम् । अत एव 'रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यम् । पुरुषस्य तथा आत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ।' (साङ्ख्यकारिका-५९) इत्यपि उपपद्यते । नर्तकीभ्रूलताभङ्गवत् विनोदकस्य संसारस्य नर्तकीनिवृत्ताविव निवृत्तेः प्रधाननिवृत्तौ अवश्यम्भावात् ।

ततश्च इदं सम्पन्नं यत् त्रिगुणात्मिकायाः मूलप्रकृतेः कार्यभूतः समस्तः प्रपञ्चः त्रैगुण्येनैव अन्वितः अत एव सुखदुःखमोहात्मकः सङ्घातरूपः । अयञ्च असंहतपुरुषार्थः । पुरुषोऽपि ज्ञानशक्तिमान् क्रियाशक्तिशून्यः अपेक्षते क्रियाशक्तिमन्तं सङ्घातम् । अनयोः यः सम्बन्धः पङ्ग्वन्ध-न्यायेनान्योन्याभिमानलक्षणः तत्कृत एव सर्वः अपि संसारः । अनयोः विवेकः एव कर्तव्यः। विवेकज्ञानमेव मोक्षे उपायः। इदं विज्ञानं दृढीकर्तुं तत्वाभ्यासः कर्तव्यः उक्तञ्च- 'एवं तत्वाभ्यासात् नास्मि न मे नाहं इत्यपरिशेषम् । अविपर्ययात् विशुद्धं केवलमुत्पद्यते ज्ञानम् ।।'[७] इति ।

एवं विवेकविज्ञानाभ्यासात् नास्मि अहं कर्ता न वा उत्पत्तिमान् न मम स्वामित्वे किञ्चित् अस्ति अतः नाहं संसारस्य स्वामी । न वा अहं भोक्ता इति विशुद्धं विज्ञानमुत्पद्यते । अस्मात् ज्ञानात् मोक्षः उपपद्यते ।

यद्यपि संसारः सत्यः सः विवेकविज्ञानानन्तरमपि तथैव यथा-पूर्वमनुवर्तते तथाऽपि तस्य ततः परं बन्धरूपता नास्ति । बन्धकस्य मिथ्याज्ञानस्य तत्वज्ञानेन अपोदितत्वात् । तदुक्तम्-

**'दृष्टा मया इति उपेक्षकः एकः दृष्टा अहं इति उपरमति अन्या ।**
**सति संयोगे अपि तयोः प्रयोजनं नास्ति सर्गस्य ॥'**[८] इति ।

अविवेकपूर्वकत्वात् बन्धस्य तदभावात् न बन्धप्रसक्तिः इति कारिकार्थः ।

तदिदं परमर्षिणा कपिलेन उपदिष्टम् ।

**'पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।**
**स्थित्युत्पत्तिप्रलयाः चिन्त्यन्तं यत्र भूतानाम् ॥'**[९] इति ।

तदिदं साङ्ख्यदर्शनं बहुषु अन्येषु दर्शनेषु पूर्वपक्षतया वा सम्प्रतिपन्नार्थैकदेशतया वा उपलभ्यते । यथा प्रकृतेः स्वातन्त्र्यं वा स्वतन्त्रप्रवृत्तिः वा अनेन दर्शनेन दर्शितमन्ये दार्शनिकाः नाङ्गीकुर्वन्ति । सत्कार्यवादादिकं केनचिदंशेन बहव अङ्गीकुर्वन्ति । अविवेकेन एव संसार इति आत्मा शुद्धः इति च सर्वे स्वीकुर्वन्ति इति रीत्या इतरेषु दर्शनेषु बहुशः इदमुपलभ्यते ।

एवमस्य दर्शनस्य त्रैगुण्यादिसिद्धान्त एव आयुर्वेदादिलौकिक-शास्त्रैरुपयुक्त इति विज्ञायते । एवं कार्यस्य सर्वस्य प्रीतिपरिताप-

विषादहेतुत्वं पुरुषस्य तु औदासीन्यम् इति सिद्धान्तः । यदि सर्वैः मनसि प्रियते तर्हि वस्तुनि प्रीतिरल्पीयसी भवेत् ततश्च वस्तुलाभे प्रमोदः तदभावे दुःखमिति क्रमः अपगच्छेद् इति सामाजिकमपि प्रयोजनमस्मिन् दर्शने विद्यते । तदेवं सर्वेषु दर्शनेषु महत्तमां स्थितिं लभत इदं साङ्ख्यदर्शनम् इति सिद्धं भवति इति शम् ।

**पादटिप्पण्यः**

१. श्वेताश्वतरोपनिषत्
२. साङ्ख्यकारिका - २
३. **साङ्ख्यकारिका** - ४
४. साङ्ख्यकारिका - २२
५. साङ्ख्यकारिका - २९
६. साङ्ख्यकारिका - ५७
७. साङ्ख्यकारिका - ६४
८. साङ्ख्यकारिका - ६०
९. साङ्ख्कारिका - ६९

-------

# योगशास्त्रस्य प्रधानग्रन्थकाराः

-वि.विजयसिंहः सि.वि.

वार्षगण्यः, व्यासः, वाचस्पतिमिश्रः, इत्यादयः प्रधानग्रन्थकारा भवन्ति । पतञ्जलिः प्राचीनमेव योगशास्त्रं सूत्ररूपेणावतारयामास । यतो हि भण्यते 'अनादिकालतो वृत्ताः समया हि प्रवाहतः' इति । पतञ्जलेः कालः क्रिस्तपूर्वद्वितीयशतकीय इति विद्वद्भिर्भण्यते ।

योगसूत्रकर्ता पतञ्जलिर्महाभाष्यकारात् पतञ्जलेर्भिन्न आहोऽभिन्न इति विवादः समस्ति । भारतीयसम्प्रदायानुगुणं महाभाष्यकर्ता योगसूत्रकर्तुर्न भिद्यते । पाश्चात्या एतयोरभेदं नाङ्गीकुर्वते । अथ च पातञ्जलमायुर्वेदशास्त्रमपि वर्तत इति साम्प्रदायिका आचक्षते ।

तथा हि -

**योगेन चित्तस्य पदेन वाचां**
**मलं शरीरस्य तु वैद्यकेन ।**
**योऽपाकरोत्तं प्रवरं मुनीनाम्**
**पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥ इति ।**

श्लोकमपीमं पातञ्जलमतं वैद्यानधिकृत्य भणितमिति वदन्ति-

**उत्तमो रसवैद्यस्तु मध्यमो मूलिकादिभिः ।**
**अधमः शस्त्रदाहाभ्यां सिद्धवैद्यस्तु मान्त्रिकः ॥ इति ।**

इदानीं योगसूत्राणि दृश्यन्ते । महाभाष्यं चोपलभ्यते । आयुर्वेदग्रन्थः श्रूयते एव । भविष्यति काले लप्स्यते नवेति दैवमेव प्रमाणम् । इति सङ्क्षेपतः पतञ्जलिमीमांसा कृता । भाष्यकारादयश्च प्रस्तूयन्ते ।

योगसूत्रभाष्यकारः व्यासः कृष्णद्वैपायनभिन्न इत्यत्र न संशयः । मिथिलानिवासी वाचस्पतिमिश्रः, प्रायः भामतीकृद्भिन्नः व्यासभाष्य-व्याख्यानभूतं तत्ववैशारद्याख्यं चक्रे । योगसूत्राणां व्याख्यातृषु तान्त्रिका एवाधिकतया वर्तन्ते । विशेषतः वङ्गदेशीयास्तान्त्रिकाः काश्मीरदेशस्थाः शैवा एषां सूत्राणां व्याख्यानं कृतवन्त इति तद्व्याख्यातृमीमांसोऽपि कृत एव ।

**दर्शनस्य सामान्यपरिचयः-**

शास्त्रमिदं 'अथ योगानुशासनम्' इति प्रारभ्यते । न तु 'योग-जिज्ञासा' इति । तत्र निदानमिदं भवति- नेदं शास्त्रं बुद्धितन्त्रम् । अपि तु 'उपदेशतन्त्रम्' इति । बुद्धितन्त्रत्वे शास्त्रस्य षड्विधतात्पर्य-लिङ्गोपकरणकत्वं भवति । योगशास्त्रस्य षड्विधतात्पर्यलिङ्गोपकरणकत्वं खलु न सम्भवति । योगशास्त्रस्यानुभविकत्वं तन्त्रशास्त्रवत् । तत्र खलु ध्येयरूपादिषु परिष्कारादेर्न कृत्यं वर्तते । धनुर्वेदे वाक्यार्थादिना लक्ष्यवेधे कोऽपि समर्थो न भवति । निरन्तराभ्यासशरणा एव लक्षणचणा भवन्ति नेतरे ।

अधुनातने परिसरे योगशास्त्रं शरीरनाभीति दृश्यते । सूत्राणां स्थूलदर्शने मनोनाभीति ज्ञायते । सूक्ष्मदर्शने देहमनःशुद्धिद्वारेण आत्मना भीत्येव ज्ञायते ।

एतेन देहातिरिक्तमात्मानं नाभितया प्रतिपादयतां भारतीयशास्त्राणां पन्थानमेव योगशास्त्रमपि पततीति ज्ञायते ।

योगशास्त्रपरम्परायां हठयोगप्रदीपिकादयः दैहिकमारोग्यमात्रं प्रतिपादयन्तीति भासन्ते ।

अष्टाङ्गो योगः । तथा हि सूत्रम्-

यम-नियमासन-प्राणायाम-प्रत्याहार-धारण-ध्यान-समाधयः अष्टावङ्गानि इति ।[१]

तत्र यमाः प्रजानां हिताधायकाः । नियमाः स्वाध्यायादयः स्वहिताधायकाः । आसनं स्थिरसुरतं ध्यानकरणम् । श्वासादिगतिः प्राणायामः । विषयेभ्य इन्द्रियाणां प्रत्यावर्तनं प्रत्याहारः । देहरूपदेशे चित्तस्य बन्धनं धारणा । अनुसन्ततं ज्ञानं ध्यानम् । ध्येयैकभासं मनोगमनं समाधिः ।

मोक्षः फलम् । मनःपूरुषयोः शुद्धिर्मोक्षः । मुमुक्षुरधिकारी । विषयो योगः । सम्बन्धो यथायोग्यः ।

मोक्षश्च 'सत्वपूरुषयोः शुद्धिसाम्ये कैवल्यम्'[२] इति सूत्रानुसारेण बुद्धितत्वस्य नैर्मल्यम्, क्लेशादिदूरत्वरूपं नैर्मल्यं पुरुषस्य, स्वरूप-मात्रस्थितत्वरूपं केवलत्वं मोक्षशब्देन भण्यते ।

मोक्षमार्गे देहजाः सिद्धयः काश्चिद्भवन्ति । एकधैव बहुदेहस्थत्वम् अजरत्वम् [३]अरिमाद्यष्टसिद्धिमत्वमित्याद्याः । ता अप्यतीत्य कैवल्यं प्राप्नोति ।

प्रमेयादिकमीदृशं वदद्योगशास्त्रं पादचतुष्कवत्प्रतीयते । चत्वारः पादाः समाधि- साधन-विभूति-कैवल्यनाम्ना व्यवह्रियन्ते । आहत्य एकोन-द्विशतं सूत्राण्यत्र भवन्ति ॥

## प्रमाणानि

त्रीणि प्रमाणानि 'प्रत्यक्षानुमानागमाः प्रमाणानि'[४] इति योगशास्त्रेऽ-

भ्युपगतानि । प्रमाणमीमांसामधिकृत्य न किञ्चिच्चिन्तनीयम् । विश्व-सृष्टिमधिकृत्यापि ।

**प्रधानतत्वानि**

योगशास्त्रं न स्वतन्त्रं शास्त्रम् । उपकरणभूतं शास्त्रमेतत् । न ज्ञायते क एतच्छास्त्रं साङ्ख्यशास्त्रेण संयोजयामासुरिति । साङ्ख्यं द्विविधम् सेश्वरं निरीश्वरमिति यद्वदन्ति तत्र शेषशेषित्वेन वा अवयवावयवित्वेनाभि-मतयोरेतयोः साङ्ख्ययोगशास्त्रयोः न किमपि साम्यं वर्तते । परम्परैव चिन्त्येति यन्मयोक्तं तदन्यथा न भाव्यमिति प्रार्थये ।

योगशास्त्रं कस्यापि शास्त्रस्याङ्गं भवितुमर्हति । न केवलं साङ्ख्यस्य । अद्वैतवेदान्तस्य, विशिष्टाद्वैतस्य, तत्ववादस्य च ।

आपाततोऽपि दृष्टेषु सूत्रेषु साङ्ख्यशास्त्राङ्गत्वं न दृश्यते ।

अथ च तत्वानि परमात्म - जड - जीवा भवन्ति ।

अधिकृत्य परमात्मानं सूत्राणि नातिविस्तरेण प्रस्तुवन्ति स्तुवन्ति वा । 'ईश्वरप्रणिधानाद्वा'[५] इति, 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'[६] इति सूत्रद्वये साक्षात्प्रतिपाद्यः । 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थभावनम्' इत्यत्र तच्छब्दवाच्यत्वं न प्रतीतः । क्लेशेति सूत्रे ईश्वरस्वरूपं किञ्चिदिवोक्तम् । अवशिष्टेषु त्रिषु सूत्रेषु ईश्वरः साक्षादपि नोक्तः । सूत्रेष्वेतेषु जीवस्वरूपमपि नोक्तम् । 'व्याधिस्त्यान-प्रमादालस्याविरति' इत्यादिषु देहस्वरूपमेव भणितम् ; नात्मा । वेदेषु वेदान्तेषु वा जीवः निरञ्जनत्वेन, देहेनाऽलिप्तत्वेनैव भणितः मन अधिकृत्य सूत्रेषु भणितम् । मनोऽपि नात्मा ।

सूत्राण्येतानि न जडस्वरूपमपि प्रतिपादयन्ति मुख्यतः । निरूपितमपि न सम्पूर्णतया । अत एव योगशास्त्ररीत्या विश्वसृष्टिः कीदृशीति वक्तुं न शक्यते ।

तदास्तां सूत्रमेवाद्यं पश्यामः ।

योगश्चित्तवृत्तिनिरोधः इति । योगशब्दस्य 'उपाय' इत्यर्थः प्रसिद्धः । 'वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यम्'[७] इत्यादिषु उपायार्थ एव योगशब्दः ।

ज्ञानात्मको योग उपाय इत्यर्थः । कर्मात्मको मोक्षोपायः कर्मयोग इत्यर्थः । अतश्चित्तवृत्तिनिरोधः उपायेष्वन्यतमः । नैकल एव सः । चित्तवृत्तिनिरोध नासाधारणं कारणम् । रावणादीनामपि तपसि चित्तवृत्तिनिरोध आसीत् । न तेषां सत्वशब्दितमनःशुद्धिरासीत् । न पूरुषशुद्धिरपि सञ्जाता ।

'देशबन्धश्चित्तस्य धारणा'[८] 'तत्र प्रत्ययैकतानता ध्यानम्,'[९] इति धारणाध्यानयोः अर्थः विवृतः

'नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्नि, नासिकाग्रे, जिह्वाग्र इत्येवमादिषु देशेषु बाह्ये वा चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा' इति व्यासभाष्यम् ।

प्रत्ययैकतानता ध्यानम् इति पाश्चात्यं सूत्रं सन्ततप्रवाहरूपस्य ज्ञानस्य ध्यानत्वं वक्ति । ध्यानधारणयोर्व्यावर्तकधर्मजिज्ञासायां प्रत्ययैकतानताभावं धारणाया लक्षणं वदेन्नान्यथा ।

तन्त्रशास्त्रे 'खण्डा स्मृतिर्धारणा स्यादखण्डा ध्यानसञ्ज्ञिता' इति

लक्ष्यते । 'चित्तस्य देशबन्धः' ध्यानधारणयोः साधारणः । नैष धारणाया असाधारणः ।

समाधिं परिचाययत्सूत्रं 'तदेवार्थनिर्भासं स्वरूपशून्यमिव समाधिः'[१०] इति । अत्रापि सूत्रे विरोध इव भासते ।

'अर्थनिर्भासम् इति 'स्वरूपशून्यमिव' इति च । विषयवस्तुनैरपेक्ष्यं न 'अर्थनिर्भास'शब्दार्थः । 'ध्यानमेव ध्येयाकारतया भासते यत्तदर्थ-निर्भासम्' इति भाष्यम् । तथाऽपि 'स्वरूपशून्यमिव' कथं भवतीत्येव प्रश्नः भवति ।

तन्त्रशास्त्रे तु 'अप्रयत्नात्समाधिश्च' इति धारणाध्यानयोः अग्रिमं रूपमेव समाधिशब्दितमिति ज्ञायते ।

योगशास्त्रे 'ध्यानधारणसमाधि'पदार्थानां भेद एवोच्यते । 'तथाहि त्रयमेकत्र संयमः' इति । 'एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा संयमः इति' इति व्यासभाष्यम् ।

बुद्धेरेव तिस्रोऽवस्था एव 'धारणाध्यानसमाधि'शब्देन भण्यन्ते इति वदतस्तन्त्रयोगशास्त्रस्य भिन्न एव पन्था इति ज्ञायते ।

तान्त्रिकं विवरणमेवात्र यौगिकमित्यत्र न कोऽपि संशीतिः । धारणा प्रयत्नं ध्वनयतीति निरुक्तिविदां सुविदितमेव । ध्यानं 'ध्यै-चिन्तायाम्' इति 'चिती सञ्ज्ञाने' इति च सञ्ज्ञानार्थकम् । 'सञ्ज्ञानम्' 'सन्ततं ज्ञानम्' इति निरुच्यमानं शोभते । सम्यगाधानं समाधिरिति निरुच्यते । 'मनस'इत्यार्थिकम् । सम्यक्त्वं तत्र विना प्रयत्नेन इति च आर्थिकम् ।

शास्त्रमुखेन शब्दचातुर्विध्यमाह न्यायसूत्रकारो गौतमः । अभ्युपगम-तन्त्रं, सर्वतन्त्रं, समानतन्त्रं, प्रतितन्त्रमिति । अभ्युपगमतन्त्रं

समानतन्त्रेण न भिद्यते इति शब्दत्रैविध्यमेवेति कश्चिद्वैशेषिकः समर्थं न्यायसूत्रकारं चिक्षेप । तदास्ताम् । शब्दस्त्रिविधः सर्वतन्त्र-समानतन्त्र-प्रतितन्त्रभेदेन ।

सर्वतन्त्रशब्दः- यौगिकः । समानतन्त्रः- शास्त्रद्वयव्यवहारसाधारणः । प्रतितन्त्रः- पारिभाषिकः ।

पारिभाषिकशब्दाः तत्तद्व्यक्तिमनोभवाः भवन्ति । न तेऽत्यन्तं विश्वास्या भवन्ति । पारिभाषिकशब्दैर्निरूप्यमाणं पूर्णं वा शास्त्रमित्यलम् ।

'अभावप्रत्ययालम्बना वृत्तिर्निद्रा'[११] इति निद्रालक्षणम् । निर्विकल्पकज्ञानं नानुभविकम् । नैयायिकैरप्यनभिमतं वाचस्पतिमिश्रः प्रसभेन तत्प्रमेयं न्यायशास्त्रगतत्वेन संयोजयामास ।

मनोवृत्तिष्वन्यतमं विकल्पं वर्णयन्नाह सूत्रकारः

**'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'** ।। इति ।

'वस्तुशून्ये शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारः विकल्पः' इति भाष्यम् । व्यवहारस्यैतस्य निदर्शनं न कुत्राऽपि लभ्यते । गाढनिद्रानन्तरं प्रबोधेऽपि लक्षणमिदं न व्यापकं भवति ।

'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टा'[१२] इति मनोवृत्तयो निरूपिताः । 'प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः'[१३] इति मनोवृत्तिवैविध्यं निरूपितम् । निद्रा मनोवृत्तिरेव न भवति । 'अभावप्रत्ययालम्बनं' वृत्तिरेव न भवति । मनसि विश्रान्ते आत्मा केवलं भवति । तत्रस्थानन्द-प्रत्ययं निद्रानन्तरं जाग्रद्दशायां विषयीकुरुते । निद्रायां मनस अभाव एवानुभाविकः शास्त्रसम्मतश्च । कथं निद्रा मनोवृत्तिर्भवति । वृत्तिर्व्यापारः । मनसो व्यापाराभावरूपा निद्रा मनोवृत्तित्वं कथं भजते?

विपर्ययं मनोवृत्तिं वदता भ्रमस्त्यक्त इति न्यूनता च ।

वेदव्यासेन मनोवृत्तय अन्यथैवोक्ताः । तन्त्रेऽपि ।

**मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः ।**
**चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥**[१४]

'बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमाने त्वहङ्कारश्चित्तं स्मरणकारणम्' इति स्कान्दपुराणे व्यास एव स्पष्टीकुरुते ।

'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं, स्वरूपप्रतिष्ठा वा चितिशक्तिः' इति[१५] मोक्षः निरूप्यते ।

'कृतभोगापवर्गीणां पुरुषार्थशून्यनां यः प्रतिप्रसवः कार्यकारणात्मकानां गुणानां तत्कैवल्यं, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति' इति व्यासभाष्यम् । भाष्यमिदं न सूत्रानुगुणमिति भाति । मोक्षेऽनुपयुक्तानां गुणानामनुत्पत्तिरित्यापातत एव प्रतीयते । 'कृतभोगापवर्गाणाम्' इतीदं विशेषणम् असङ्गतम् ।

'अथात आनन्दस्य मीमासा भवति ' इत्युपक्रम्य तैत्तिरीयश्रुतौ 'श्रोत्रियस्य च कामहतस्य' इति मुक्तस्य शास्त्रसम्पन्नत्वमुक्तम् ।

ऋग्वेदेऽपि-

**ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु ।**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ।**[१६]

इति मुक्तानां शास्त्रसम्पन्नत्वादयो गुणा मोक्षेऽपि भवन्ति । 'स तत्र पर्य्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' इति सुखं चोक्तम् ।

अप्राकृतः प्राकृतोऽपि भोगः, प्राकृतदेहोऽप्राकृतश्च तत्र वर्तन्त इति ब्रह्मसूत्रमतम् ।

योगसूत्रस्य तदनुसारेणापि व्याख्यानं शक्यं कर्तुम् ।

पुरुषार्थे- मोक्षे शून्यानाम्- अप्रयोजकाणां गुणानां- सत्वरजस्तमसां प्रतिप्रसवः- अनुत्पत्तिः स्वरूपप्रतिष्ठा वा ज्ञानशक्तिर्मोक्ष इति । 'न तत्र सत्वं न रजस्तमश्च' इति गुणशून्यत्वं मोक्षे प्रमाणप्रमितम् । 'न प्रेत्य सञ्ज्ञाऽस्ति' इति श्रुतेः बहिरिन्द्रियजन्यं ज्ञानं मोक्षे नास्तीति सिद्धान्तः । 'भूतजज्ञानलोपः स्यात्' इति स्मृतिः । 'स्वरूपप्रतिष्ठा चितिशक्तिः' इति योगशास्त्रेण तदेवोक्तम् ।

शाङ्करसिद्धान्तरीत्याऽपि शक्यं व्याख्यातुमिदं सूत्रम् । पुरुषाणाम् अर्थाः प्रयोजनानि अपरमोक्षान्तानि तच्छून्यानां- तद्रहितानां गुणानां- शुद्धबुद्धमुक्तत्वादीनां प्रतिप्रसवः- संसारप्रतिरोधः । कैवल्यम्- मोक्षः । स्वरूपप्रतिष्ठा वा- स्वात्मैकनिष्ठा, अन्यनिष्ठा चितिशक्तिरेव मोक्ष इति ।

सूत्रमिदं विविधमतोक्तमुक्तिपरत्वेन व्याख्यातुं शक्यम् । एतेन योगसूत्रनिकरं नितराम् अङ्गशास्त्रम् । व्यासभाष्यमपि योगशास्त्रार्थज्ञाने न निरवकाशम् इति च ज्ञायते । अत एव वेदव्यासः 'एतेन योगः प्रत्युक्तः' इति निराचकार । एतेन- स्वतन्त्रशास्त्रत्वाभावेन, एतेन- तत्वानां समग्रत्वेनानिरूपणेन एतेन- सर्वसमयानुसारेण व्याख्यातुं शक्यत्वेन, एतेन- आप्त्यादिराहित्येन, योगः प्रत्युक्तः- निराकृत इत्यर्थः ।

वेदव्यासोऽपि योगशास्त्रं साङ्ख्ये नान्तर्भावयामास ।

'रचनानुपपत्तेश्च नानुमानम्' (ब्र.सू.२.२.१) इत्यादिभिः चतुर्भिः सूत्रैः निरीश्वरसाङ्ख्यमतं निराचकार । 'अन्यत्राभावाच्च न तृणादिवत्' (ब्र.सू.२.२.२) इत्यनेन सूत्रेण सेश्वरसाङ्ख्यमतं निराचकार । सेश्वरनिरीश्वरसाङ्ख्यमते द्वितीयाध्यायद्वितीयपादे निराचकार । प्रथमपादे योगपद्धतिं' निराचकार ।

'नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति श्रुत्या भगवद्गीतासु च मोक्षे भक्तिहेतुकत्वं दृश्यते ।

इतिहासे मुक्ताः श्रूयन्ते । योगमार्गेण धृतराष्ट्रपरीक्षिदादयः विना हठयोगेन शिशुपालभीष्मपाण्डवादयः पुरावृत्तेभ्य एभ्यः हठयोग अनिवार्यः न भवतीति ज्ञायते । तथा च 'एतेन - साधनस्यास्य अनिवार्यत्वाभावेन योगः प्रत्युक्तः ।

तन्त्रशास्त्रे शौचासनयोरप्राधान्यं प्रतिपादितम् , कण्ठत एव 'शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।'

'अहिंसास्तेयसत्यब्रह्मचर्यापरिग्रहा यमाः'[१७] इति योगसूत्रम्-

'शौच-सन्तोष-तपः -स्वाध्यायेश्वरप्रणिधनानि नियमाः'[१८]

भागवते- 'अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।

आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ।'[१९]

इति द्वादशयमाः सामाजिकाः ।

'शौचं जपस्तपो होमः श्रद्धाऽतिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ।'

इति नियमा आत्मोद्धाराः । पतञ्जलिमते न्यूनता ।

ह्रीः, असञ्चयः, मौनं, स्थैर्यम्, क्षमा, अभयम्, आस्तिक्यम्-इत्यधिका गुणा भागवते ।

होमः, श्रद्धा, आतिथ्यं, मदर्चनं, तीर्थाटनं, स्थैर्यम्, इत्यधिका गुणा भागवते ।

'ते समाधावुपसर्गा व्युत्थाने सिद्धयः'[२०] इति पतञ्जलिः 'ते - अणिमादयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः विघ्नाः व्युत्थितचित्तस्योत्पद्यमानाः सिद्धय इति व्यासभाष्यम् । 'अन्तरायान् वदन्त्येतान्' इति भागवतमपि एवमेवाभिप्रैति । एवं स्वोक्तं पूर्वं वन्ध्यमिति वदच्चिन्त्यम् । इति शम् ॥

**पादटिप्पण्यः**

१. यो.सू.२९-साधनपादः
२. यो.सू. ३.५५
३. 'ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च' -यो.सू.३.४५
४. यो.सू. १.७
५. यो.सू. १.२३
६. यो.सू. १.२४
७. श्रीभाग.
८. यो.सू. ३.१
९. यो.सू. ३.२
१०. यो.सू. ३.३
११. यो.सू. १.१०
१२. यो.सू. १.८
१३. यो.सू. १.[illegible]
१४. [illegible].३.२७.१५
१५. यो.सू.४.३४

# न्यायदर्शनम्

-डा. शङ्करनारायण अडिगः
उपनिदेशकः,
पूर्णप्रज्ञसंशोधनमन्दिरम्,बेङ्गळूरु.

## I. दर्शनस्य सामान्यपरिचयः

समग्रं संस्कृतवाङ्मयं साङ्गेषु वेदेषु धर्मशास्त्रेतिहासपुराणाख्यासु स्मृतिषु, दर्शनेषु, काव्यनाटकाख्यानकाख्यायिकाप्रभृतिषु तद्व्याख्यानभूतेषु च ग्रन्थेषु व्यापृतमिति समेषां न तिरोहितो विषयः । तत्र दर्शनं नाम वस्तुतत्वनिरूपकः श्रेष्ठपुरुषप्रवर्तितो विशिष्टशब्दसन्दर्भः । तथा चाऽऽह न्यायकोशकारः दर्शनशब्दनिरुक्तिसन्दर्भे-

**'दर्शनं तत्वज्ञानसाधनं शास्त्रम्'** इति ।[1] तच्च दर्शनं द्विविधं वेदबाह्यं, वेदापेक्षमान्तरं चेति । तत्र बौद्धचार्वाकादिदर्शनं वेदबाह्यमिति कथ्यते यस्य तु नास्तिकदर्शनमिति नामान्तरम् । द्वितीयमास्तिकदर्शनं प्राधान्येन षड्विधम् । साङ्ख्यपातञ्जलपूर्वमीमांसोत्तरमीमांसान्यायवैशेषिकदर्शनभेदेनेति । तदुक्तम्-

**'द्वौ योगौ द्वे च मीमांसे द्वौ तर्काविति षड् बुधाः'**[2] इति ।

तत्र प्रमाणादितत्वज्ञानस्य निःश्रेयसोपायत्वप्रतिपादकं प्रमाणादिस्वरूपनिरूपकं च न्यायदर्शनं महर्षिणा गोतममुनिना प्राणायि । तत्र न्यायो नाम **प्रमाणैरर्थपरीक्षणम्**[3] इति । तदर्थस्तु समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः । अत्र नैकैकं प्रमाणमर्थं परिच्छिनत्ति किन्तु समस्तानि । तादृशन्यायप्रतिपादकस्य न्यायशास्त्रस्य न्यायः, न्याय-

विस्तरः, न्यायदर्शनम्, न्यायविद्या, आन्वीक्षिकी, तर्कविद्या, प्रमाण-विद्या इत्यादीनि नामान्तराणि च भवन्ति ।

**आन्वीक्षिक्याः सर्वशास्त्रोपकारकत्वप्रतिपादनम्-**

'मानाधीना मेयसिद्धिः' इत्यभियुक्तोक्त्यनुसारेण प्रमेयव्यवस्थापने प्रमाणानां परं वैशिष्ट्यमस्ति । तादृशप्रमाण निरूपणेऽनितरसाधारण-चातुर्यप्रदर्शकं न्यायशास्त्रं सर्वशास्त्राणां - प्रदीप इव वर्तते । तथा चोक्तं भगवता वात्स्यायनेन न्यायप्रथमसूत्रभाष्ये-

**'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता'**[४] इति ।

वेदप्रतिपादितधर्माधर्मादिस्वरूपं वेदाविरोधितर्कसाहाय्येन ज्ञातव्य-मिति मनुरपि वेदाविरोधितर्कस्य श्रौतार्थनिर्णयसहकारित्वं प्रत्यपीपदत् ।

**'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥'**[५] इति ।

न्यायशास्त्रस्य सर्वशास्त्रोपकारकत्वादेव **'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती'** इति विद्याविभागकरणसमये त्रय्यादिपूर्वत्वेनाऽन्विक्षिक्याः निर्देशः कृतो वर्तते ।

## II. न्यायदर्शनस्य प्रधानग्रन्थकाराः

### १. गोतमः-

इदानीं न्यायशास्त्रग्रन्थकाराणां जन्मस्थितिकालचरितादिकं विचार्यते । तत्र न्यायसूत्रकर्ता महर्षिः गोतमः गोतमगोत्रापत्यम् । तेन विरचितं न्यायदर्शनम् अध्यायपञ्चके व्यापृतम् । प्रत्याध्यायमाह्निक-द्वयम् । पञ्चाध्याय्यामाहत्य अष्टाविंशत्यधिकपञ्चशतानि (५२८)

सूत्राणि सन्ति । पण्डितमण्डल्याम् अयं गोतमो वा गौतमो वेति नाम्नि विप्रतिपत्तिरस्ति[६] परन्तु न्यायशास्त्रप्रवक्ताऽयं गोतम एव भवेत् । गौतमस्त्वन्योऽहल्यापतिः । य इन्द्रमहल्यां च शप्तवान् । अयं गोतम एवेत्यत्र इमानि प्रमाणानि भवन्ति ।

स्कान्दपुराणे कालिकाखण्डे सप्तदशाध्याये-

**'गोतमः स्वेन तर्केण खण्डयन् तत्र तत्र हि ।**
**शप्तोऽथ मुनिभिस्तत्र शार्गालीं योनिमृच्छति' ॥**[७]

इति गोतमनाम्नाऽयं प्रस्तावितः । पाद्मपुराणे च-

**'कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।**
**गोतमेन तथा न्यायं साङ्ख्यं च कपिलेन वै ॥'**[८]इति ।

श्रीहर्षोऽपि गोतममेव तमाह-

**'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।**
**गोतमं तमेवेक्ष्यैव यथा वित्थ तथैव सः ॥'**[९] इति ।

**'गोतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि ।**
**शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्वकर्मसु ॥'**[१०] इति । इत्यादि ।

अस्यैव अक्षपादः, अक्षचरणः, गौतम इत्यादिसमाख्याभेदैः व्यवहारः क्रियते ।

गोतमस्य देशविषये ऐतिह्यमिदं जागर्ति । गोतमगोत्रापत्यं गोतमनामा महर्षिः मिथिलादेशे न्यायदर्शनं प्रणिनायेति । न्यायदर्शनप्रणेतैव गोतमोऽक्षपादशब्देन न्यायवार्तिककारेण न्यायवार्तिके निर्दिष्टो वर्तते ।

**'यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।**
**कुतार्किकाज्ञाननिवृत्तिहेतोः करिष्यते तस्य मया निबन्धः ॥'**[११] इति ।

न्यायभाष्ये वात्स्यायनोऽपि तथैवाऽह-

**'योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम् ।**
**तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥'[१२]** इति ।

गोतमस्य जीवितकालस्तु सामान्यतः क्रिस्तीयसार्धैकशतकं भवेत् । प्रभासक्षेत्रे सोमशर्मनाम्नो ब्रह्मणस्य चत्वारः पुत्रा आसन् । तेषु प्रथमोऽक्षपाद एव न्यायसूत्राणि रचयामासेत्यप्यैतिह्यं वर्तते ।

**२. वात्स्यायनः** (क्रिस्तीयचतुर्थशतकम्)

वात्स्यायनो न्यायसूत्राणां भाष्यं निर्ममे । न्यायवार्तिककर्ता उद्योतकरः वात्स्यायन एव न्यायभाष्यमकरोदिति न्यायवार्तिके वदति-

**'यदक्षपादप्रतिमः भाष्यं वात्स्यायनो जगौ ।**
**अकारि महतस्तस्य भारद्वाजेन वार्तिकम् ॥'[१३]** इति ।

अस्यैव पक्षिलस्वामी, मल्लनागः, कौटिल्यः, द्रामिल इति नामान्तराणि श्रूयन्ते ।

**'वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः ।**
**द्रामिलः पक्षिलस्वामी विष्णुगुप्तोंऽशुलश्च सः ॥'**

इत्यभिधानचिन्तामणिकोशे ।

**'विष्णुगुप्तस्तु कौटिल्यश्चाणक्यो द्रामिलोंऽशुलः ।**
**वात्स्यायनो मल्लनागपक्षिलस्वामिनावपि ॥'**

इत्यपि त्रिकाण्डशेषकोशे उक्तम् ।

एवञ्चार्थशास्त्रनिर्माता चाणक्यः, न्यायभाष्यकर्ता, कामसूत्रनिर्माता च वात्स्यायन एक एवेति ज्ञायते । अस्य पक्षिलस्वामीति नाम तु-

**'अथ भगवताऽक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्तिकारम्भः'** इति न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्रेणोक्तम् । अयं तु वात्स्यायनः क्रिस्तीयचतुर्थे शतके आसीत् इति विमर्शकाः । यतोऽयं पञ्चमशतकस्थबौद्धदार्शनिकदिङ्नागेनाऽटीकितो वर्तते । द्रामिलनामधेयेनायं द्राविडदेशीय इति, तत्रापि कञ्चिप्रदेशे आसीदिति, पक्षिलस्वामीति नाम्ना च दाक्षिणात्य इति निर्णेतुं शक्यते ।

### ३. उद्योतकरः (क्रिस्तीयषष्ठशतकम्)

उद्योतकरः न्यायसूत्राणां वार्तिकमकरोत् । वार्तिकलक्षणं च

**'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञाः मनीषिणः ॥'**[१४] इति ।

अयं तु भारद्वाजगोत्रजः[१५] पाशुपताचार्य इति स्वात्मानं कथयामास- **'इति श्रीपरमर्षिभारद्वाजपाशुपताचार्यश्रीमदुद्योतकरकृतौ न्यायवार्तिके पञ्चमोऽध्यायः'** इति ।[१६] **'एष पन्थाः स्रुघ्नं गच्छति'**[१७] इति वाक्येन अयं थानेश्वरसमीपस्थस्रुघ्नदेशे आसीदिति ज्ञायते । दिङ्नागनागार्जुनप्रभृतिबौद्धतार्किकान् निराकर्तुं न्यायवार्तिकं लिखितवानिति स्वयमेव वदत्युद्योतकरः ।

**'यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।**
**कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ॥'**[१८] इति ।

### ४. वाचस्पतिमिश्रः (क्रिस्तीय-८४१)

धर्मकीर्तिप्रभृतिभिः बौद्धतार्किकैः उद्योतकरकृते न्यायवार्तिके खण्डिते सति वैदिकन्यायरक्षायै वाचस्पतिमिश्राः न्यायवार्तिक-

तात्पर्यटीकामकुर्वन् । तथा चोक्तं न्यायवार्तिकतात्पर्ये वाचस्पतिमिश्रैः-

**'यद्यपि भाष्यकृता कृतव्युत्पादनमेतत् । तथापि दिङ्नाग-प्रभृतिभिरर्वाचीनैः कुहेतुसन्तम-ससमुत्थापनेनाऽऽच्छादितं शास्त्रं न तत्वनिर्णयाय पर्याप्तम्'**[१९]

एते वाचस्पतिमिश्रा मिथिलावासिनः । न्यायसूचीनिबन्धाख्य-स्वीयग्रन्थे एते स्वस्य ग्रन्थरचनाकालं समसूचयन् ।

**'न्यायसूचीनिबन्धोऽसावकारि विदुषां मुदे ।**
**श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ।।'**[२०] इति ।

संवत्सरोऽयं ८९८ विक्रमीयो भवति । तदनुसारेणायं ८४१ क्रिस्तीयाब्धिर्भवति । एते षड्दर्शनाचार्याः सर्वतन्त्रस्वतन्त्रा इति च दर्शनेषु प्रथिताः । यतः साङ्ख्ये- साङ्ख्यतत्वकौमुदी, अद्वैते शाङ्कर-भाष्यस्य भामतीव्याख्याग्रन्थः, तर्के न्यायवार्तिकतात्पर्यटीका, न्याय-कणिका, एवमादयः ग्रन्था विविधदर्शनेषु एतैर्निबद्धाः ।

### ५. उदयनाचार्याः (क्रिस्तीयवर्षम्- ९८४)

वाचस्पतिमिश्रकृतिषु बौद्धदार्शनिकैः खण्डितेषु मिथिलायां जनिमापन्ना उदयनाचार्याः न्यायवार्तिकतात्पर्यटीकापरिशुद्धिनामकं ग्रन्थं विरचय्य न्यायशास्त्रं उद्धरुः । परिशुद्धिग्रन्थप्रारम्भे सरस्वती-देवताप्रार्थनमेतैः बहुमनोहरमकारि-

**'मातः सरस्वति पुनः पुनरेष नत्वा**
**बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।**
**वाक्चेतसोर्मम तथा भव सावधाना**
**वाचस्पतेर्वचसि न स्खलतो यथैते ।।'**[२१] इति ।

वचनेनानेन वाचस्पतिमिश्रवचनगाम्भीर्यं, उदयनाचार्याणां तद्वचनेषु गौरवादरश्च ज्ञायते । न्यायपरिशिष्टम्, किरणावली, न्यायकुसुमाञ्जली, आत्मतत्वविवेकम्, इत्यादीन् ग्रन्थान् एते रचयामासुः ।

## ६. जयन्तभट्टः (क्रीस्तीयदशमशतकम्)

जयन्तभट्टः न्यायसूत्राण्यधिकृत्य न्यायमञ्जरीनामानं स्वतन्त्रं ग्रन्थं चकार । चन्द्रापत्यमयं काश्मीरदेशीयः । न्यायमञ्जर्यां मीमांसकानामन्विताभिधानखण्डनम्, अभिहितान्वयवादसमर्थनम्, स्फोटवादनिरासः, वेदापौरुषेयत्वनिरासः, एवमादयो विषयाः सुष्ठु न्यरूपिषत । माध्यमिकादिसमस्तबौद्धनिरासससमये हास्यपूर्वकम् इदं जयन्तभट्टवचनं मनोहारि वर्तते ।

**'नास्त्यात्मा, फलभोगमात्रम्, अथ च स्वर्गीयचैत्यार्चनं**
**संस्काराः क्षणिकाः युगस्थितिभृतश्चैते विहाराः कृताः ।**
**सर्वं शून्यमिदं, वसूनि गुरवे देहीति चाऽदिश्यते**
**बौद्धानां चरितं किमन्यदियती दम्भस्य भूमिः परा ॥'** इति ।

## ७. भासर्वज्ञः - (क्रिस्तीयदशमशतकम्)

न्यायसारोऽस्य कृतिः । अस्य अष्टादशाधिकाः व्याख्याः सन्ति । परिच्छेदत्रये न्यायसूत्रोक्तषोडशपदार्थविवचनमत्र कृतम् । भासर्वज्ञस्तु प्रत्यक्षमनुमानमागम इति प्रमाणत्रयमेवाङ्गीकरोति ।

## ८. वर्धमान उपाध्यायः-

गङ्गेशोपाध्यायसुतोऽयं उदयनकृतपरिशुद्धेः प्रकाशाख्यव्याख्यामरचयत् । तत्त्वचिन्तामणिटीका, न्यायकुसुमाञ्जलिप्रकाशः, लीलावतीप्रकाशः, आत्मतत्वविवेकटीका, आन्वीक्षिकीनयतत्वालोकः इत्यादयोऽस्य

कृतयः प्रसिद्धाः । अयं मिथिलादेशे दर्भाङ्गमण्डलान्तर्गते 'करिजन' ग्रामे जातः । क्रिस्तीयैकादशशतकमस्य कालः ।

## III. प्रमाणानि

**न्यायमते प्रमाणलक्षणम्-**

प्रमा, प्रमितिः यथार्थानुभवः- इत्यनर्थान्तरमिति न्यायसिद्धान्तः । प्रमाणं तु एतादृशप्रमासाधनमिति न्यायदर्शने लक्षणमाटङ्कितम् । वात्स्यायनेन **'उपलब्धिसाधनानि प्रमाणानि'** इति प्रमाण-लक्षणमगादि[२२] । तदनुसारेण **'उपलब्धिहेतुः प्रमाणम्'**[२३] इति न्याय-वार्तिककारेणापि लक्षितम् ।

**'सम्यगनुभवसाधनं प्रमाणम् । सम्यग्ग्रहणं संशयविपर्यया-पोहार्थम्'**[२४] इति न्यायसारे भासर्वज्ञोऽपि तथैवाऽह ।

**विविधदर्शनेषु प्रमाणविभागः-**

आगमानुमानयोरप्रामाण्यं वदन्तश्चार्वाकाः प्रत्यक्षमेकमेव प्रमाण-मित्याहुः ।

प्रत्यक्षानुमाने द्वे एव प्रमाणे इति बौद्धाः ।

वैशेषिकास्तु शब्दस्योपमानस्य च प्रामाण्यमङ्गीकृत्यापि ते द्वे अपि अनुमानेऽन्तर्भावयन्ति ।

प्रत्यक्षानुमानोपमानशास्त्रार्थापत्त्यनुपलब्धिरूपषट्प्रमाणवादिनो भाट्ट-मीमांसकाः । प्रत्यक्षानुमानोपमानशास्त्रार्थापत्त्याख्यपञ्चप्रमाणवादिनः प्राभाकराः ।

**तत्र न्यायसिद्धान्तः**

नैयायिकास्तु 'साक्षात्करोमि' 'अनुमिनोमि' 'उपमिनोमि'

'शाब्दयामि' इत्यनुभूयमानानुव्यवसायानुरोधेन प्रत्यक्षानुमानोपमान-शब्दाख्यानि चत्वारि प्रमाणानीति वदन्ति ।

तथा च गोतमन्यायसूत्रम्-

**'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'**[२५] इति ।

ननु अर्थापत्ति - अनुपलब्धि - ऐतिह्यानां प्रमाणान्तराणां सत्त्वात् कथं प्रमाणानां चातुर्विध्यमिति चेन्न । अनुमानेऽर्थापत्त्यनुपलब्ध्योः, शब्दे चैतिह्यस्यान्तर्भावान्न पृथक् प्रमाणत्वं तेषामित्याशयः ।

**प्रत्यक्षप्रमाणलक्षणम्-**

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् । प्रमाभूतप्रत्यक्षलक्षणं तु **'इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'**[२६] इति । इन्द्रियस्यार्थेन सह सन्निकर्षाद् यद् ज्ञानमुत्पद्यते तत् प्रत्यक्षमिति समुदितार्थः । मरुमरीचिकादौ जायमानजल-भ्रमेऽतिव्याप्तिवारणायाव्यभिचारीति पदमुपात्तम् । अव्यपदेशपदेन व्यवसायात्मकपदेन च क्रमेण निर्विकल्पकसविकल्पकप्रत्यक्षयोः परिग्रहः सूत्रे कृतः ।

**अनुमानलक्षणम्-**

अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः । व्याप्यस्य पक्षवृत्तिताज्ञानं परामर्शः । तथा चोक्तं विश्वनाथेन-

**'व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ।**
**अनुमायां ज्ञानमानं लिङ्गं तु करणं न हि ।**
**अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥'**[२७]

तत्रानुमितिकरणं मतभेदेन द्विविधम् । 'व्यापारवदसाधारणं कारणं करणम्' इति वदतां प्राचीनानां मते व्याप्तिज्ञानं करणम् । यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र 'धूमो वह्निव्याप्यः' इति व्याप्तिज्ञानमनुमितिकरणं भवति[२८] । वात्स्यायनोऽप्याह- 'अनुमानं च लिङ्गलिङ्गिनोः सम्बन्धदर्शनम्'[२९] इति । 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति वदतां नवीनानां मते तु अनुमितिकरणं लिङ्गपरामर्शः । यथा 'वह्निव्याप्यधूमवानयम्' इति ज्ञानं 'पर्वतो वह्निमान्' इति अनुमितेः करणं भवति ।

तच्च अनुमानं द्विविधम् । स्वार्थं परार्थं च । स्वस्यैवार्थः अनुमित्यात्मकप्रयोजनं यस्मात् तत् स्वार्थम् । परस्य प्रतिवादिनो मध्यस्थस्य वाऽर्थः प्रयोजनम् अनुमित्यात्मकं संशयनिवृत्तिर्वा यस्मात् तत् परार्थम् । आद्यं स्वार्थानुमितिहेतु । द्वितीयं परार्थानुमितिहेतु । विस्तरस्तु अन्नम्भट्टविरचिततर्कसङ्ग्रहे द्रष्टव्यः ।

प्रकारान्तरेणानुमानं त्रिविधम् । पूर्ववत्, शेषवत् सामान्यतो दृष्टं च । पूर्वं कारणम् । तद्वत् तल्लिङ्गकं कार्यानुमानम् । यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् ।[३०] वात्स्यायनोऽप्याह- **'यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिः'** इति ।[३१] द्वितीयं कार्यलिङ्गकं कारणानुमानम् । यथा नदीवृद्ध्या वृष्ट्यनुमानम् । तथा च न्यायभाष्यम्-

**'यत्र कार्येण कारणमनुमीयते पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति'**[३२] इति ।

कार्यकारणभिन्नं लिङ्गं सामान्यतो दृष्टम् । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् । यथा वा इच्छादिभिरात्मानुमानम् । तथा च न्यायभाष्यम्-

**'इच्छादयो गुणाः । गुणाश्च द्रव्यसंस्थाः । तद् यदेषां स्थानं स आत्मेति'**[३३]

अत्रार्थे गोतमन्यायसूत्रम्-

**'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च'**[३४] इति ।

एवं केवलान्वयि, केवलव्यतिरेकि, अन्वयव्यतिरेकि चेति त्रिविधमनुमानं बोध्यम् । इत्यनुमाननिरूपणम् ।

**उपमानलक्षणम्**

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । यथा च प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिः उपमानम् उपमितिः । एतादृशोपमितेः करणमुपमानमिति उपमानलक्षणं सम्पद्यते । तथा च गोतमसूत्रम्-

**'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्'**[३५] इति । अत्रार्थे वात्स्यायनभाष्यम्- **'उपमानं सारूप्यज्ञानम् । यथा गौरेवं गवय इति । सारूप्यं तु सामान्ययोगः'**[३६] इति । अन्नम्भट्टोऽप्याह-

**'उपमितिकरणमुपमानम् । तच्च सादृश्यज्ञानम् । यथा गोसदृशो गवयः इति ज्ञानमुपमानम् । सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानमुपमितिः ।'** इति[३७] ।

अत्र वैशेषिकाः साङ्ख्याश्च पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात् पदवाच्यत्वानुमितिरेव, तस्मादुपमानं न प्रमाणान्तरमित्याहुः । नैयायिकास्तु अभिप्रायमिममित्थं निराकुर्वन्ति ।

'अनुमिनोमि' इत्यनुव्यवसायविषयीभूता अनुमितिर्यथा प्रमित्यन्तरं तथा 'उपमिनोमि' इति विलक्षणानुव्यवसायविषयीभूतोपमितिरपि प्रमित्यन्तरं भवेत् । अतस्तत्करणमुपमानमपि प्रमाणान्तरमेवेति तेषामाशयः । अपि च व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेरनुभव-सिद्धत्वादुपमानं प्रमाणान्तरं भवेत् ।[३८]

**शब्दप्रमाणनिरूपणम्-**

आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । तथा च न्यायसूत्रम्- 'आप्तोपदेशः शब्दः'[३९] आप्तलक्षणं तु न्यायभाष्ये वात्स्यायनेनैवम् अभिहितम्-

**'आप्तः खलु साक्षात्कृधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा'** इति ।[४०] शाब्दप्रमां प्रति पदज्ञानं करणम् । वृत्तिज्ञानसहकृतपदजन्यपदार्थस्मरणं व्यापारः । शाब्दबोधः फलम् ।

अत्र न्यायसिद्धान्ते वाक्यं द्विविधम् । वैदिकं लौकिकं चेति । वैदिक-मीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं तु आप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् । आकाङ्क्षायोग्यतासन्निधिरहितं वाक्यमप्रमाणम् । तस्माद् आकाङ्क्षादिमद् वाक्यं प्रमाणम् । वाक्यार्थबोधे आकाङ्क्षादिज्ञानं कारणमिति प्रमाणचातुर्विध्ये न्यायसिद्धान्तः ।

**न्यायमते शब्दस्य पृथक्प्रामाण्यसमर्थनम्-**

वैशेषिकाः शब्दो न पृथक् प्रमाणम् । शाब्दज्ञानं तु लैङ्गिकमेव । तथा च शब्दोऽनुमानेऽन्तर्भवतीति वदन्ति । तथा च प्रशस्तपादभाष्यम्- **'शब्दादीनामनुमानेऽन्तर्भावः, समानविधित्वात्'** । समान-

प्रवृत्तिप्रकारत्वात्- यथा व्याप्तिग्रहणबलेनानुमानं प्रवर्तते तथा शब्दादयोऽपि ।[४१]

अत्रैवमनुमानप्रयोगः न्यायकन्दल्यां श्रीधरभट्टैः प्रदर्शितः- **'शब्दोऽनुमानं व्याप्तिबलेनार्थप्रतिपादकत्वाद् धूमवत्'** इति ।[४२] तथा च वैशेषिकसूत्रम्- **'एतेन शाब्दं व्याख्यातम्'**[४३] इति ।

अत्र वचस्पतिमिश्राः न्यायवार्तिकतात्पर्यटीकायामेवं प्रतिपादयन्ति । शब्दस्यानुमानासङ्कीर्णविषयसद्भावात् पृथक्प्रामाण्यम् । यतः शब्दस्यापि अनुमानागोचरः स्वर्गापूर्वदेवतादिरूपो विषयोऽस्ति । तथाहि- अत्यन्तादृष्टपूर्वाणां स्वर्गापूर्वदेवतादीनां ज्ञानं शब्दादेव भवति ।

१. **'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।**
**अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥'**

इति । अत्र स्वर्ग एव वाक्यार्थः ।

२. एवमपूर्वमपि शब्दमात्रबोध्यम्-

**'तत् खलु स्वर्गनरकादिहेतुः कालान्तरस्थायी पुरुषविशेषगुणः । स्वकार्यविरोधि'** इति । अत्रापूर्वं वाक्यार्थः ।

३. एवं देवताऽपि क्वचित् शब्दमात्रबोध्या- **'सा हि सूक्तहर्विर्भागिनी सहस्राक्षाद्युपेत-देहादिमती'** अत्र देवता वाक्यार्थः ।

न चैतानि शब्दाद् ऋते अस्मदादिप्रत्यक्षविषयाः । न चागृहीतलिङ्गेनैतेषां प्रमा । तेषु लिङ्गस्यैवाप्रवृत्तेः । शब्दस्थले व्याप्त्याद्यनुसन्धानाभावेऽप्यर्थप्रतीतिर्भवति । तस्मात् शब्दोऽपि पृथक् प्रमाणमित्यङ्गीकर्तव्यम् ।[४४] इति ।

यद्यपि न्यायसिद्धान्ते चतुर्विधानि प्रमाणानि। तथाऽपि भासर्वज्ञ-स्त्रिविधान्येव प्रमाणान्यङ्गीचकार। तथा च तद्वचनम्- **'त्रिविधं प्रमाणं प्रत्यक्षमनुमानमागम इति'**[४५] इति।

## IV. विश्वसृष्टिः

'सृष्टिर्नामोत्पत्त्यनुकूलो व्यापारः'।[४६]

तत्र न्यायसिद्धान्तमञ्जर्यां जानकीनाथभट्टाचार्यकृतायामेवं सृष्टिक्रमो निरूपितो वर्तते। प्राणिनां भोगभूतये प्रथमतः परमेश्वरस्य सिसृक्षा जायते। सर्गादौ भगवानीश्वरः प्रयोज्यप्रयोजकवृद्धशरीरद्वयं स्वीकृत्य व्यवहरति। ततस्तद्व्यापाराद् बालः शक्तिग्रहं प्राप्नोति। विश्वसृष्टिस्त्वेवं भवति। प्रथमतोऽदृष्टविशिष्टात्मसंयोगात् परमाणुषु क्रियोत्पत्तिः। ततः परमाणुद्वयसंयोगः। ततो द्व्यणुकोत्पत्तिः। ततस्त्रिषु द्व्यणुकेषु कर्मोत्पत्तिः। ततस्तेषां संयोगः। ततस्त्र्यणुकोत्पत्तिः। एवं चतुरणुकाद्युत्पत्तिक्रमेण चतुर्भूतोत्पत्तिः। तेभ्यः परमेश्वरेच्छयाऽण्डोत्पत्तिर्जायते।

## V. प्रधानतत्वानि

न्यायदर्शने षोडश पदार्था अङ्गीकृताः। ते च **'प्रमाणप्रमेय-संशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेय-साधिगमः'**[४७] इति न्यायसूत्रे प्रतिपादिताः।

१. तत्र प्रथमतो निर्दिष्टानि **प्रमाणानि** पूर्वमेव न्यरूपिषत।

**२. प्रमेयानि**

प्रमायां यद् भासते तत् प्रमेयम्। तानि च- आत्म-शरीरेन्द्रियार्थ-

बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःखापवर्गभेदाद् द्वादश । तथा च न्यायसूत्रम्-

'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्'[४८] इति ।

एतेषु द्वादशप्रमेयेषु आत्मापवर्गाख्ये द्वे आद्यन्तस्थे उपादेये प्रमेये । मध्ये यानि शरीरादिदुःखान्तानि दश प्रमेयान्युक्तानि तानि मुमुक्षुभिर्हेयानि । अस्त्यन्यदपि द्रव्यगुणकर्म-सामान्यविशेषसमवायाख्यं प्रमेयजातम् । अवान्तरभेदेन तदपरिसङ्ख्येयम् । तत्तु कुतो नोक्तम् इत्याक्षिप्य न्यायभाष्ये समाहितम् । सूत्रोक्तद्वादशप्रमेयमिथ्याज्ञानात् संसारः । तेषां ज्ञानेनैवापवर्गो भवति । न तु द्रव्यादिप्रमेयाणां ज्ञानेन । अतोऽपवर्गसाधनज्ञानविषयामेव प्रमेयाणामत्र निरूपणं विहितमिति ज्ञातव्यम् । तथा च न्यायभाष्यम्-

**'अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति'**[४९] इति ।

### ३. संशयः

न्यायसूत्रे उल्लिखितानि संशयादिचतुर्दशप्रमेयानि न्यायशास्त्रप्रतिपाद्य-प्रधानतत्वानीति सङ्गीर्यन्ते । यत एते विषया न्यायशास्त्रादन्यत्र प्रामुख्येन न प्रतिपादिताः । एतेषु प्रमेयेषु विषये एव न्यायदर्शनस्य विशिष्टं योगदानं परिगण्यते । तत्र प्रमाणैरर्थपरीक्षणं न्यायः । स च पञ्चावयववाक्यरूपः । तादृशन्यायस्य पूर्वाङ्गभूतश्चायं संशयो भवति । यतो निश्चिते पदार्थस्वरूपविषये पञ्चावयववाक्यरूपो न्यायो न प्रवर्तते । यत्पदार्थविषये संशयस्तत्रैव न्यायस्य प्रवृत्तिर्भवति । तत्रानवधारणात्मकं

ज्ञानं संशयः । स त्रिविधः । साधारणधर्मासाधारण-धर्मविप्रतिपत्ति-लक्षणभेदात् ।[५०]

इति संशयसङ्क्षेपः ।

**४. प्रयोजनम्-**

येन प्रयुक्तः पुरुषः प्रवर्तते तत् प्रयोजनम् । सुखावाप्ति-दुःखनिवृत्तिभ्यां हि पुरुषः कार्येषु प्रयुज्यते । तदिदं प्रयोजनं न्यायस्य पूर्वाङ्गमेव । प्रयोजने सति हि न्यायः प्रवर्तते ।[५१]

**५. दृष्टान्तः-**

यत्र विषये लौकिकस्य परीक्षकस्य च बुद्धिसाम्यं भवति, स दृष्टान्तः । वादिप्रतिवादिनोर्यत्र मतिवैषम्यं स दृष्टान्तो न भवति । तादृशो दृष्टान्तो द्विविधः साधर्म्यवैधर्म्यभेदात् । पर्वतो महानसवद् वह्निमानिति साधर्म्यदृष्टान्तः । पर्वतो ह्रदवद् बह्न्यभाववान् नेति वैधर्म्यदृष्टान्तः ।

**६.सिद्धान्तः-**

प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः ।[५२]

**७. अवयवः-**

परार्थानुमानवाक्यैकदेशोऽवयवः । स पञ्चविधः प्रतिज्ञाहेतूदाहरणोप-नयनिगमभेदात् । तथा च न्यायसूत्रम्-

'प्रतिज्ञाहेतूदाहरणोपनयनिगमान्यवयवाः'[५३] इति ।

**८. तर्कः-**

यत्पदार्थविषयकतत्त्वनिश्चयो न जातः, तद्विषयकतत्वनिर्णयार्थं

प्रमाणैरूहनं तर्कः । तथा च न्यायसूत्रम्- **'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्वज्ञानार्थमूहस्तर्कः'**[५४] इति । यथा - आत्मा नित्योऽनित्यो वेति सन्देहे, 'यद्यात्मा नित्यो न स्यात् तर्हि बन्धमोक्षव्यवस्था नोपपद्येत' इत्यूहस्तर्कः । एतच्च मानसं ज्ञानम् । न्यायमते तर्को न प्रमाणम् । अस्य प्रमाणसहकारिमात्रत्वात् ।

## ९. निर्णयः-

वादिप्रतिवादिनोरन्योन्यं स्वपक्षस्थापनापरपक्षनिराकरणानन्तरं मध्यस्थः उभयपक्षप्राबल्यदौर्बल्यविमर्शं कृत्वा तत्वावधारणं करोति । न्यायमतेऽवयवतर्काभ्यामयं वस्तुतत्वनिर्णयो भवति । अयमेव निर्णय इत्युच्यते । तथा च न्यायसूत्रम्- **'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः'**[५५] इति ।

## १०.११.१२. वाद-जल्प-वितण्डाः

एतास्तिस्रः कथा भवन्ति । तत्र तत्वनिर्णयफलः कथाविशेषो वादः । अत्र गुरुशिष्ययोर्मध्ये कथा प्रवर्तते । नात्र जयपराजयौ स्तः । जयपराजययोरुद्देशेन वादिप्रतिवादिनोर्मध्ये या कथा प्रवर्तते स जल्पः । यत्र कथायां स्वपक्षस्थापनामकृत्वैव परपक्षनिराकरणं क्रियते सा वितण्डेत्युच्यते । तथा च न्यायसूत्रम्- **स प्रतिपक्षस्थापनाहीनो वितण्डा'**[५६] इति ।

## १३. हेत्वाभासः-

असाधको हेतुवदाभासमानो हेत्वाभासः । हेत्वाभाससामान्यलक्षणं च यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वमिति । हेत्वाभासत्व-विषयकज्ञानस्यानुमितिविरोधित्वं च स्पष्टमेव । ते च हेत्वाभासाः

सव्यभिचारविरुद्धप्रकरणसम(सत्प्रतिपक्ष)साध्यसम(असिद्ध)कालातीत (बाधित)भेदेन पञ्चविधाः । तथा च न्यायसूत्रम्- **'सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः'**[५७] इति । तथा चात्र न्यायभाष्यम्- **'हेतुलक्षणाभावादहेतवो हेतुसामान्याद् हेतुवद् आभासमानाः'**[५८] इति ।

**१४. छलम्-**

वाक्यप्रयोक्तुरनभिप्रेतस्यार्थान्तरस्योपपादनेन वाक्यविरोधप्रदर्शनं छलमित्युच्यते । नेपालराज्यादागतोऽयं नवकम्बवत्त्वादित्युक्ते नवत्व-सङ्ख्यानुपपत्तिप्रदर्शनेन वाक्यविरोधप्रदर्शनं छलं भवति ।

**१५. जातिः-**

स्वव्याघातकमुत्तरं जातिः । सा च साधर्म्यवैधर्म्यादिप्रकारेण चतुर्विंशतिधा ।[५९]

न्यायसूत्रे तु जातिलक्षणमेवमुक्तम् । वादिनाऽन्वयव्याप्त्या साध्य-साधने कृते प्रतिवादिना तत्र व्यतिरेकव्याप्त्या यत् साध्यानुपपत्तिप्रदर्शनं क्रियते, सा जातिरित्युच्यते । यथा 'शब्दोऽनित्यः कृतकत्वाद् घटवद् व्यतिरेकेण व्योमवत्' इत्युक्ते 'यदि शब्दो नित्याकाशवैधर्म्यादनित्यः स्यात् तदाऽऽकाशेनाऽमूर्तत्वसाधर्म्यान्नित्यः किं न स्यात् ? इत्येवमनुपपत्तिप्रदर्शनं जातिरिति प्रतिपादितम् । तथा च न्यायसूत्रम्-

**'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः'**[६०] इति ।

**१६. निग्रहस्थानम्-**

गोतमोक्तः षोडशतमः पदार्थः निग्रहस्थानम् । विपरीतं ज्ञानमज्ञानं

च निग्रहस्थानम् । यथाऽहेतौ हेतुत्वज्ञानम् । तथा च न्यायसूत्रम्- **'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्'**[६१] इति । एतानि निग्रहस्थानान्याहृत्य द्वाविंशति बोध्यानि ।

## VI. न्यायमते मुक्तिसाधनानि

प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्यायसूत्रे[६२] उक्तम् । तत्र तत्त्वज्ञानाद् जायमानं निःश्रेयसं कीदृशमिति विचारो न्यायवार्तिके प्रवर्तितो दृश्यते । निःश्रेयसं तु दृष्टादृष्टभेदेन द्वेधा भवति । तत्र प्रमाणादिपदार्थतत्त्वज्ञानाद् जायमानं निश्रेयसं दृष्टमभिमतम् । यतश्च प्रमाणादिपदार्थज्ञानाद् हानोपादानोपेक्षाबुद्धिर्जायते । तदर्थं प्रमाणादि-पदार्थज्ञानमावश्यकम् । परन्तु आत्यन्तिकदुःखनिवृत्त्यात्मकादृष्टरूपं निःश्रेयसम् आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखाप-वर्गादिस्तत्वज्ञानाद् भवति ।[६३]

पदार्थतत्वज्ञानात् कथं मुक्तिर्जायते इति विषयस्तु **'दुःखजन्म-प्रवृत्तिदोषमिथ्याज्ञाना-नामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः'**[६४] इति द्वितीयसूत्रे प्रतिपादितोऽस्ति । संसारो नाम प्राप्तकार्यकारणभावा अविच्छेदेन वर्तमानाः दुःखादिमिथ्याज्ञानान्ताः पदार्था एव ।

तत्वज्ञानेन च पुनः देहादावात्मबुद्धिरूपमिथ्याज्ञानं निवर्तते । तन्निवृत्त्या देहानुकूलस्त्रीपुत्र-धनेन्द्रियमनआदिपदार्थेषु रागाख्यः, देह-प्रतिकूलभूतेषु द्वेषाख्यश्च दोषो निवर्तते । रागद्वेषाभावे प्रवृत्त्यभावः । प्रवृत्तिश्च जन्मसाधकौ धर्माधर्मावभिप्रेतौ । तैर्दोषैर्हि प्रेरितः प्राणी प्रतिषिद्धानि हिंसास्तेयादीनि, प्रशस्तानि दानपरित्राणादीन्याचरति । तेन हि पुण्यपापलक्षणौ धर्माधर्मौ भवतः । प्रवृत्त्या च जन्म, दुःखं च भवतः ।

धर्माधर्मरूपप्रवृत्त्यभावे देहान्तरसम्बन्धरूपजन्म नास्ति । जन्माभावे आत्यन्तिकदुःखनिवृत्तिरूपमोक्षश्च भवति ।[६५]

## VII. मुक्तिस्वरूपम्

आत्यन्तिकी दुःखनिवृत्तिः, एकविंशतिदुःखध्वंसो वा न्यायमते मोक्षः । तत्र दुःखं एकविंशतिप्रभेदभिन्नम् । शरीरं, षडिन्द्रियाणि, तेषां षड्विषयाः, षडिन्द्रियजन्यषड्ज्ञानानि, सुखं-दुःखं चेति दुःखे एकविंशतिः प्रभेदाः । तत्र शरीरं तावद् दुःखायतनत्वाद् दुःखम् । इन्द्रियाणि विषया बुद्धयश्च दुःखसाधनत्वात् दुःखम् । सुखं तु दुःखसम्बन्धाद् दुःखम् । दुःखं स्वरूपत एव तत् ।[६६]

मोक्षे च एतेषां सर्वेषां निवृत्तिर्भवति । तथा च दुःखप्रागभावा-समानकालीनदुःखनिवृत्तिर्मोक्ष इति न्यायसिद्धान्तः सम्पन्नः । एतादृश-मोक्षस्तु श्रवणादिक्रमेण तत्वज्ञानद्वारा आत्मतत्वसाक्षात्कारवतः पुरुषश्रेष्ठस्य परमेश्वरानुग्रहवशाद् भवति । मोक्षे सुखानुभवो नास्तीति न्यायमतम् । मोक्षे पुनः या दुःखाभावस्थितिः सैव सुखमिति व्यवह्रियते । तत्र सुखे सति हि तदानुषङ्गिकदुःखस्यापि प्राप्तिर्भवति । सुखस्य दुःखाविनाभूतत्वात् । सुखसाधनपदार्थाश्च बाहुल्येन दुःख-सम्पादका अपि भवन्तीत्यव्यभिचरितो नियमोऽस्ति । अतो नैय्यायिकैः मोक्षे सुखं नाङ्गीक्रियते । एवं च सकलात्मविशेषगुणोच्छेद एव न्यायमते मोक्षः ।[६७]

अथ मोक्षे यदि सुखं नास्ति तर्हि तार्किकाणां मते श्रुतिविरोधः स्यात् । **'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'**[६८] इति श्रुतिर्हि मुक्तस्य सर्वकामप्राप्तिं प्रतिपादयति । अतो मोक्षे सुखाङ्गीकार आवश्यक इति चेन्न । पूर्वोक्तरीत्या मोक्षे सुखसद्भावस्य बाधितत्वात्

श्रुतेश्चामुख्यार्थस्वीकारेण तद्विरोधाभावात् । तत्र मुक्तस्य सर्वकामानवाप्तिर्नास्तीति श्रुतेरमुख्यार्थः स्वीक्रियते । यत्र श्रुतेर्मुख्यार्थः प्रमाणबाधितस्तत्रामुख्यार्थस्वीकारस्तत्रतत्र क्रियते एव । यथा 'प्लवन्ते ग्रावाणः'[६९] इति । तथाऽत्रापीति मुक्तिविषये न्यायमतसङ्क्षेपः ।

## VIII. इतरदर्शनेषु न्यायदर्शनस्य प्रभावः

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति वचने काणादपदं तर्कशास्त्रपरम् । यतः काणादन्यायमते एते समानतन्त्रे भवतः । अतो नव्यन्यायमतप्रवर्तकस्य गङ्गेशोपाध्यायस्य कालादारभ्य उभे अपीमे मते संलग्ने भूत्वा नव्यन्यायमतरूपेणावतेरतुः । तेन क्रिस्तीयद्वादशशतकादारभ्य उभे अपि दर्शने परस्परसाहाय्येन समभ्यवर्धेताम् । एवं च तर्कशास्त्रस्य सर्वशास्त्रोपकारकत्वं पूर्वोक्तवचने स्मर्यते ।

'व्यवहारे न्यायनयः' इति वदन्तो द्वैतवेदान्तिनः न्यायशास्त्रपद्धतिमुररीकृत्य स्वदर्शनम् अभिवर्धयामासुः । भवतु तत्र प्रमाणप्रमेयादिपदार्थतत्वचिन्तनाव्यत्यासः । चिन्तनाक्रमस्तु न्यायशास्त्रमाधारीकृत्य प्रवर्तते । सकलास्तिकदर्शनाधारभूतानां वेदानां प्रामाण्यसमर्थनं तु न्यायशास्त्रेण भवति । न्यायशास्त्रप्रतिपादितन्यायसहकारेण वेदार्थज्ञानमपि सम्भवतीति हेतोः न्यायशास्त्रमपि वेदोपकारकमित्यभ्युपगतमभियुक्तैः[७०] ।

## IX. न्यायदर्शनेन सामाजिकप्रयोजनानि

न्यायदर्शनेन किं प्रयोजनमित्यत्र 'प्रमाणप्रमेयादिपदार्थतत्त्वज्ञानान्निश्रेयसाधिगमः' इति प्रथमसूत्रमेव प्रमाणम् । न्यायशास्त्रेण पदार्थतत्वज्ञानं भवति । तेन च हानोपादानोपेक्षाबुद्धिरूपं दृष्टं प्रयोजनं समाजस्य अस्त्येव । न्यायशास्त्राध्ययनेनाध्येतॄणां बुद्धिर्निशिता तीक्ष्णा च भवति ।

## X. न्यायवैशेषिकमतयोः साम्यवैषम्ये-

प्रथमतः साम्यनिरूपणम्-

१. उभयोर्दर्शनयोरसत्कार्यवादोऽभ्युपगतः । साङ्ख्यमते कार्यकारणयोस्तादात्म्यमुररीकृतम् । साङ्ख्यास्तु तन्तव एव पटात्मना परिणमन्त इति वदन्ति न्यायवैशेषिकदर्शने तु तन्तुषु तद्भिन्नः पटो जायत इत्यभ्युपगम्यते ।

२. सकलेषु कार्येषु समवायिकारणासमवायिकारणनिमित्तकारणप्रतिपादके उभे अपि मते ।

३. आत्माङ्गीकारे साम्यम् । 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्'[७१] इति न्यायसूत्रे इच्छाद्वेषादिभिरात्माऽनुमेयः इति प्रतिपादितम् । समानश्चायमंशो वैशेषिकदर्शनेऽपि ।

४. मनसोऽणुत्वेन युगपद्ज्ञानानुत्पत्तिर्भवति । तथा च न्यायसूत्रम्– 'युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'[७२] इति । वैशेषिका अपि एवमभिप्रयन्ति । तथा च वैशेषिकसूत्रम्- 'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्'[७३] इति ।

वैषम्यनिरूपणम्-

एतेषु विषयेषु एतयोर्दर्शनयोर्वैषम्यमस्ति ।

१. वैशेषिकाः हेत्वाभासत्रयं वर्णयन्ति- असिद्धिर्विरोधः सन्दिग्धत्वम् (अनैकान्तिकत्वम्) इति । नैयायिकास्तु पञ्च ।

२. प्रमाणविभागविषये मतभेदः । नैयायिकाः चतुःप्रमाणवादिनः । वैशेषिकास्तु शब्दस्योपमानस्य च प्रामाण्यमङ्गीकृत्यापि ते द्वे अपि अनुमानेऽन्तर्भावयन्ति ।

३. न्यायमते षोडशपदार्थज्ञानान्मुक्तिः । वैशेषिकमते तु द्रव्यगुणादिषट्पदार्थज्ञानान्मुक्तिः ।

४. वैशेषिकाः पीलुषु परमाणुषु पाकं वदन्ति । तेषां मते विलक्षणतेजस्संयोगरूपपाकवशाद् घटस्याऽपरमाण्वन्तभङ्गे जाते परमाणुषु एव पाकवशाद्रूपान्तरोत्पत्तिपूर्वकं द्व्यणुकाद्युत्पत्तिक्रमेण घटान्तरोत्पत्तिर्भवति । नैयायिकास्तु साक्षाद् घटे एव पाकं प्रतिपादयन्ति । अत एते पिठरपाकवादिनः ।

एवं चैतावता प्रबन्धेन न्यायशास्त्रस्य सङ्क्षेपेण सामान्यतः परिचय एव विहित इति शम् ।

**पादटिप्पण्यः**

१. न्या.को.-पृ.सं. ३४९
२. न्या.को.-पृ.३४९
३. न्या.वा.-पृ.१५
४. न्या.भा.१.१.१- पृ.५
५. म.स्मृ. अ.११, श्लो.१०६
६. न्या.को.पृ.२
७. स्कान्द-कालिकाखण्ड- अध्याय.१७
८. पाद्मपुराणम्- उत्तरखण्ड-अ.-२०७
९. नैषधीयचरितम् - १७-७५
१०. अण्णङ्गराचार्यविरचिततर्कशास्त्रनिरूपणग्रन्थोदाहृतं गान्धर्वतन्त्रवचनम्
११. न्या.वा.पृ.६
१२. न्या.भा.- पृ.सं. ४५९
१३. न्या.वा. अ-२, अन्तिमभागे

१४. पराशरपुराणम्- अध्याय -१८
१५. न्या.को.- पृ.४
१६. न्या. वा. उपसंहारवाक्यम्
१७. न्या.वा. १.३३
१८. न्या.वा. - पृ.६
१९. न्या.वा.ता.टी.-पृ.सं.२२
२०. न्या.सू.नि.उपसंहारे
२१. न्या.वा.ता.टी.प.-पृ.सं.६९
२२. न्यायभाष्यम् - १.१.३ - पृ.सं.१८२
२३. न्या.वा.१.१.३- पृ.सं. १८४
२४. न्या.सा.-पृ.सं.१०
२५. न्या.सू.१.१.३
२६. न्या. सू. १.१.४ - पृ.१९७
२७. कारिकावली - २.१
२८. त.कौ.- पृ.सं.१०
२९. न्या.भा. १.१.५
३०. गौ. वृ. १.१.५
३१. वा.भा.१.१.५
३२. न्या.भा.१.१.५- पृ.२९१
३३. वात्स्यायनभाष्यम्-१.१.५-पृ.२९२.
३४. न्या. सू. १.१.५
३५. गो.सू. १.१.६
३६. न्या.भा. १.१.३
३७. त.स.३.१
३८. न्या.म. ३.२४
३९. न्या.सू.१.१.७
४०. न्या.भा.-१.१.७/पृ.सं.२७

४१. प्र.पा.भा.-पृ.५१२
४२. न्या.कन्दली- पृ.५१२
४३. वै.सू.९.२.३
४४. न्या.भा.ता.टी. अ-२, आह्निकम् -१, सूत्रम्-५२
४५. न्यायसारः- पृ.१०५
४६. न्या.को.-पृ.सं.१०३१
४७. न्या.सू.१.१.१
४८. न्या.सू.१.१.९
४९. न्या.भा.-पृ.सं.३०.१.१.९
५०. सर्वदर्शनसङ्ग्रहः- पृ.सं.४६३
५१. न्या.वा.-पृ.सं. १४
५२. स.द.स.-पृ.४६५.न्याय.भा.ता.टी. परिशुद्धिः - पृ.५९.
५३. न्या.सू.१.१.३२
५४. न्या.सू. १.१.४०
५५. न्या.सू. १.१.४१
५६. न्या.सू. १.२.३
५७. गो.न्या.सू.१.२.४
५८. न्या. भा. - पृ.सं. ७२., सू. १.२.४
५९. स.द.स.
६०. न्या.सू.१.२.१८
६१. न्या.सू.१.२.१९
६२. न्या.सू.१.१.१
६३. न्या.वा.- पृ.सं.१३
६४. न्या.सू. १.१.२
६५. न्या.वा.-पृ.सं.१५३
६६. न्या.वा.- पृ.६.-१.१.१
६७. सर्वदर्शनसङ्ग्रहः -पृ.सं. ५००

६८. तै.उ. २.१

६९. बृ.५.२६.१२

७०. मनुस्मृतिः - अ.११, श्लो.१०६

७१. न्या.सू. १.१.१०

७२. न्या.सू.१.१.१६

७३. वै.सू. ३.२.१

## उपयुक्तग्रन्थसूची


१. कारिकावली - विश्वनाथन्यायपञ्चाननः, बालमनोरमा प्रेस् , चेन्नै, १९२३.

२. गोतमसूत्रवृत्तिः - गोतमः - कल्कत्ता - १८६५.

३. तर्ककौमुदी लौगाक्षिभास्करः, मुम्बयी-भण्डार्कर् प्राच्यविद्यासंशोधनालयः - १८८६

४. तर्कशास्त्रनिरूपणम् - अण्णङ्गराचार्याः

५. तर्कसङ्ग्रहः - अन्नम्भट्टः मोतिलाल् बनारसी दास् वाराणसी - १९८४.

६. न्यायकन्दली - श्रीधरभट्टः - सम्पूर्णानन्दविश्वविद्यालयः, वाराणसी - १९७७.

७. न्यायकोशः - झळकीभीमाचार्यः, भाण्डरकर् प्राच्यविद्यासंशोधन-मन्दिरम्- पुणे - १९९६.

८. न्यायदर्शनम् - गोतमः - मिथिलाविद्यापीठम् - वाराणसी - १९६७.

९. न्यायभाष्यम् - वात्स्यायनः बौद्धभारती, वाराणसी - १९९८

१०. न्यायमञ्जरी - जयन्तभट्टः, सम्पूर्णानन्दविश्वविद्यालयः, वाराणसी - १९८२.

११. न्यायवार्तिकम् उद्योतकराचार्याः - मिथिलाविद्यापीठम् - वाराणसी - १९६७.

१२. न्यायवार्तिकतात्पर्यटीका - वाचस्पतिमिश्रः, मिथिलाविद्यापीठम्, वाराणसी - १९६७.

१३. न्यायवार्तिकतात्पर्यटीकापरिशुद्धिः - उदयनाचार्याः, मिथिलाविद्यापीठम् - वाराणसी - १९६७.
१४. न्यायसारः - भारसर्वज्ञः रघुनाथशास्त्री, पूना, १७७२.
१५. न्यायसिद्धान्तमञ्जरी - जानकीनाथभट्टः, रघुनाधशास्त्री, पूना, शकवर्षम् - १७७२.
१६. प्रशस्तपादभाष्यम् - प्रशस्तपादः सम्पूर्णानन्दविश्वविद्यालयः, वाराणसी, १९७७.
१७. भारतीयदर्शन (कन्नड) एस्. वि. भीमभट्टः, कर्नाटक सर्वकारपठ्यपुस्तकविभागः, बेङ्गळूरु. १९९७.
१८. वैशेषिकसूत्रम् - कणादः, चौखाम्बा संस्कृतसीरीस्, वाराणसी - १९२५.
१९. श्रीमद्भागवतम् - श्रीवेदव्यासः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गळूरु - २००४.
२०. सर्वदर्शनसङ्ग्रहः सायणमाधवाचार्यः बनारस्हिन्दुविश्वविद्यालयः, वाराणसी, १९६४.

-------

# वैशेषिकदर्शनम्

-डा. रङ्गनाथ कट्टि
उपनिदेशकः,
पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गळूरु.

## १. वैशेषिकदर्शनम्

परमपावनेयं भारतभूमिरन्यान्यदर्शनानां दार्शनिकानां चोगमस्थान-भूतेति अतिरोहितमेव समेषां विदुषामविदुषां च । सत्स्वपि बहुषु दर्शनेषु, [१]षड्दर्शनानि भारतीयदर्शनेषु विशिष्टं स्थानं भजन्ते ।

तानि च-

१. न्यायदर्शनं, २. वैशेषिकदर्शनं, ३. साङ्ख्यदर्शनं, ४. योगदर्शनं ५. पूर्वमीमांसादर्शनं ६. उत्तरमीमांसादर्शनमिति प्रथितानि । तथा चोक्तम्-

[२]**'गोतमस्य कणादस्य कपिलस्य पतञ्जलेः ।**
**व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि ॥'** इति ।

षड्दर्शनेष्वपि आदिमं दर्शनद्वयं (न्यायदर्शनं वैशेषिकदर्शनं च) सर्वशास्त्रोपकारकत्वेन नितान्तं प्रथितम् । तथा चाभियुक्तोक्तिः-

'[३]**काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्**' इति ।

तत्र काणादं शास्त्रमेव वैशेषिकं शास्त्रमित्युच्यते । तथा चोक्तं पाद्मपुराणे-

**'कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।**
**गोतमेन तथा न्यायं साङ्ख्यं च कपिलेन वै ॥'** इति ।[४]

## २. वैशेषिकदर्शनशब्दार्थः

वैशेषिकदर्शनं नामत्रयेण प्रथितम् । १.वैशेषिकदर्शनम् २. औलूक्यदर्शनम् ३. काणाद-दर्शनमिति । तत्र वैशेषिदर्शनम् इति नाम कथमागतमित्यस्मिन्विषये नैकमत्यमस्ति पण्डित-मण्डल्याम् ।

१. केचन विद्वास एवमाचक्षते- **'अन्यत्र अन्त्येभ्यो विशेषेभ्यः'** (वै.सू. १.२.६) इति सूत्रप्रतिपादितेन विशेषाख्यपदार्थेन सम्बद्धं यद् दर्शनं तद् वैशेषिकदर्शनमित्युच्यते । इतरदर्शनैरनभ्युपगतः विशेषाख्यः नूतनपदार्थः इदम्प्रथमतया यैः स्वीकृतः ते वैशेषिकाः । तद्दर्शनं वैशेषिकदर्शनमिति प्रसिद्धमभूत् इति ।

२. अन्ये मन्यन्ते । सर्वैर्दर्शनैः अन्यान्यरीत्या मोक्षस्वरूपं प्रतिपाद्यते । नैयायिकैः दुःखस्य ध्वंसः मोक्ष इत्युच्यते । परन्तु वैशेषिकैः आत्मगतसकलविशेषगुणध्वंस इति विशेषगुणमवलम्ब्यैव मोक्षस्वरूपं निरूप्यते । एवं च यद् दर्शनं मुक्तिस्वरूपनिरूपणावसरे विशेषेण (विशेषगुणेन) सम्बद्धं तद् दर्शनं वैशेषिकदर्शनमिति उच्यत इति ।

३. 'विगतः शेषः (अनन्तर्भूतः सन् अवशिष्टः) यस्य तत् विशेषम्' इति व्युत्पत्या विशेषशब्दस्य 'निर्विशेषः' इत्यर्थो लभ्यते । तथा च नैयायिकाभ्युपगतप्रमाणादिषोडशपदार्थाः, वैशेषिकाभ्युपगत-सप्तपदार्थेष्ववान्तर्भवन्ति । तथा च तादृशः कोऽपि पदार्थो नास्ति यः पदार्थः वैशेषिकाभ्युपगत-सप्तपदार्थेषु नान्तर्भवेत् । तथा च न्यायवैशेषिकदर्शनयोर्मध्ये न महान् भेदः । तस्मादेतद्दर्शनं वैशेषिकदर्शनमिति प्रसिद्धमिति केचन विमर्शका अभिप्रयन्ति ।

४. गौतममहर्षिणा तावत् प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्मुक्तिरिति न्यायशास्त्रे सूपपादितम् । तत् कणादस्यापि

सम्मतमेव । परं तु जगत्यस्मिन् पदार्था बहवः सन्ति । तन्मध्ये के धर्मिणः? कतिविधाश्च ते ? के धर्माः ? कियन्तश्च ते इत्येवं मिथोऽसङ्कीर्णरूपेण पदार्थज्ञानं विना साधर्म्यवैधर्म्यज्ञानेन न भवतीति साधर्म्यवैधर्म्यनिरूपणपुरस्सरं द्रव्यगुणादिभेदेन षडेव पदार्थाः, द्रव्यस्येदं स्वरूपं, एते एव तस्य गुणा इत्यादि सर्वं सुव्यवस्थिततया कणादः एवेदम्प्रथमतया प्रत्यपीपदत् । अत ईदृशं विशेषमुद्दिश्य दर्शनस्यास्य प्रवृत्तत्वाद् इदं दर्शनं वैशेषिकदर्शनमिति व्यपदिश्यते विद्वद्भिः ।

५. अन्ये मन्यते । विशेषशब्दस्यास्ति अर्थद्वयं- भेदः विशेषगुणश्चेति । एतादृशार्थद्वयेन सम्बद्धं दर्शनं वैशेषिकदर्शनम् । तथा हि । वेदान्तदर्शनरीत्या 'आत्मनां भेदः' 'आत्मनि विशेषगुणः' इति द्वयमपि नास्ति । दर्शनेऽस्मिन् 'आत्मनां भेदः' 'आत्मनि ज्ञानेच्छादि-विशषेगुणः' इति द्वयमपि स्वीकृतम् । साङ्ख्यदर्शनेन यद्यपि आत्मनां भेदः स्वीकृतः । तथाऽप्यात्मनि विशेषगुणः नाङ्गीकृतः । एवं चाऽत्मनां भेदं, आत्मनि विशेषगुणं च प्रतिपादयन् कणादमहर्षिः वैशेषिकशब्देनेदं समसूचयद् यद् वैशेषिकदर्शनं वेदान्त-साङ्ख्यदर्शनाभ्यां न गतार्थमिति ।

६. विशेषशब्दस्य प्रयोगः परमाणावप्यस्ति । एवं परमाणोरस्तित्वं तन्मूला च सृष्टिः येन दर्शनेनाभ्युपगता तद्दर्शनं वैशेषिकदर्शनमिति केचन विद्वांस अभिप्रयन्ति ।

७. कणादरचितवैशेषिकसूत्राणां प्रथमाध्यायस्य प्रथमाह्निके धर्म-विशेषप्रसूतात् (१.१.४) इति चतुर्थं सूत्रम् । अत्र विशेषपदं कणादेन प्रयुक्तम् । एवम् अन्ते 'संयुक्तसमवायादग्नेर्वा वैशेषिकम्' (१०.२.७) इति पुनः विशेषपदं प्रयुक्तम् । अत एतद्दर्शनं वैशेषिकदर्शनमिति प्रसिद्धमिति केचन तर्कयन्ति ।

८. केचनाचक्षते- द्वित्व-पाकजोत्पत्त्यादिकमिदम्प्रथमतया सुस्पष्टं वैशेषिकैरेव निरूपितम् । अत एवैते वैशेषिकाः, एतद्दर्शनं वैशेषिकऽदर्शनमिति प्रसिद्धमभूत् । तथा चाभियुक्तोक्तिः-

**'द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।**
**यस्य न स्खलिता बुद्धिः तं वै वैशेषिकं विदुः'** ॥ इति ।

## औलूक्यदर्शनम्

उलूकमहर्षिकुलोत्पन्नत्वात् कणादस्यैव औलूक्यमिति नामान्तरम् । अत एतद्दर्शनस्यौलूक्यदर्शनम् इति नाम्नाऽपि विद्वद्भिः व्यवह्रियते ।

## काणाददर्शनम्

महर्षिप्रवरेण कणादेन निर्मितत्वादिदं दर्शनं काणाददर्शनमिति च व्यवह्रियते ।

## ३. वैशेषिकदर्शनस्य ग्रन्थकाराः

### १. कणादमहर्षिः (क्रि.पू.७)

वैशेषिकसूत्राणां प्रवर्तकः 'कणादमहर्षिः । अयं कापोतीं वृत्तिमनुतिष्ठन् रथ्यानिपतितान् तण्डुलकणानादाय प्रतिदिनमाहारं सम्पादयति स्म । अतस्तस्य कणाद इति कणभक्ष इति वा नाम्ना प्रसिद्धिरभूत् । उलूकमहर्षेरपत्यत्वादयमेव औलूक्यः । तपस्विने कणादमुनये स्वयमीश्वर उलूकरूपधारी प्रत्यक्षीभूय पदार्थ-षट्कमुपदिष्टवान् इति ऐतिह्यम् । तस्मादस्य दर्शनस्य औलूक्य-दर्शनमिति प्रसिद्धिर्जाता ।

महर्षिरयं कश्यपगोत्रजः एकः भूसुरः । अस्य निवासस्थानं

मिथिलादेशे इति इतिहासकारा अभिप्रयन्ति । योगाचारविभूत्या महेश्वरनियोग-प्रसादौ अधिगम्य वैशेषिकदर्शनं प्रणिनाय । अनेन रचितानि वैशेषिकसूत्राणि वैशेषिकदर्शनस्य मूलाधारभूतानि । सप्तत्यधिकत्रिशतोपेते (३७०) वैशेषिकदर्शनेऽस्त्यध्यायदशकम् । प्रत्यध्यायमाह्निकद्वयं वर्तते । क्रि.पू. सप्तमे शतके कणादेन वैशेषिकसूत्राणि विरचितानीति विद्वांस अभिप्रयन्ति । 'अथातो धर्मं व्याख्यास्यामः' इति वैशेषिकदर्शनस्याऽदिमं सूत्रम् । 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति अन्तिमं सूत्रम् ।

**वैशेषिकसूत्रप्रतिपाद्यप्रमेयवर्णनम्**

तत्र प्रथमाध्यायस्य प्रथमाह्निके द्रव्यगुणकर्मणां निरूपणं, द्वितीयाह्निके जातिविशेषयोः निरूपणं दृश्यते । द्वितीयाध्याये द्रव्यनिरूपणं, तत्रापि प्रथमाह्निके भूतविशेषलक्षणम् (पृथिव्यप्-तेजोवाय्वाकाशानां लक्षणनिरूपणम्) द्वितीयाह्निके दिक्कालप्रतिपादनं च कृतम् । तृतीयाध्यायस्य प्रथमाह्निके आत्मलक्षणं द्वितीयेऽन्तः-करणलक्षणमुपवर्णितम् । चतुर्थाध्याये शरीरोपयोगिवर्णनं द्वितीये शरीरविवेचनं च विहितम् । पञ्चमाध्यायस्य प्रथमाह्निके शरीर-सम्बन्धिकर्मचिन्तनं, द्वितीयाह्निके मानसकर्मचिन्तनं च विहितम् । आह्निकद्वयोपेते षष्ठे श्रौतधर्मनिरूपणं, तत्रापि प्रथमे दान-प्रतिग्रह-धर्मविवेकः द्वितीये चातुराश्रम्योचितधर्मनिरूपणं विहितम् । तथा सप्तमाध्यायस्य प्रथमाह्निके बुद्धिनिरपेक्षगुणानां रूप-रस-गन्धादीनां निरूपणं, द्वितीयाह्निके बुद्धिसापेक्षगुणानां द्वित्व-परत्व-अपरत्व-पृथक्त्वादीनां वर्णनं कृतम् । अष्टमाध्याये निर्विकल्पकसविकल्पक-प्रत्यक्षप्रमाणचिन्तनं दृश्यते । नवमाध्याये संयोगसमवायेतरालौकिक-

प्रत्यासत्तिजन्यलौकिकप्रत्यक्षानुमानयोः निरूपणं दृश्यते । दशमेऽध्याये सुखदुःखादीनामात्मगुणानां, त्रिविधकारणानां निरूपणं च दृश्यते ।

## २. वैशेषिकसूत्राणां रावणभाष्यम्

वैशेषिकसूत्राणां प्रशस्तपादभाष्यादपि पूर्वमेकं भाष्यमासीत् तच्च रावणभाष्यमिति प्रथितमासीदिति विद्वांस अभिप्रयन्ति । उदयनाचार्याणां किरणावल्ल्याः व्याख्यात्रा पद्मनाभेनायमंश उपवर्णितः ।

**'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।**
**पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥'** इति ।

प्रशस्तपादभाष्यस्थमङ्गलश्लोकोऽयम् । अत्रत्यस्य 'प्रवक्ष्यते' इति पदस्य सार्थक्यं वर्णयन् पद्मनाभः कथयति- सूत्र-भाष्य-प्रकरण-ग्रन्थेष्वनुक्तं नूतनं विषयमत्र वर्णयन्ति प्रशस्तपादा इति । अत्र भाष्यपदेन 'रावणभाष्यम्' विवक्षितमिति किरणावलीव्याख्याता पद्मनाभोऽभिप्रैति । अपि च वैशेषिकमतरीत्या द्व्यणुकद्वयेन त्र्यणुकमुत्पद्यते । इति शारीरकभाष्ये श्रीमच्छङ्करभगवत्पादाः कथयन्ति । (शा.भा.२.२.११) वस्तुतस्तु प्रशस्तपादसिद्धान्तः द्व्यणुक-त्रयेण त्र्यणुकमेकमुत्पद्यते इति । अतः शाङ्करभाष्ये उल्लिखितोऽयमभिप्रायः प्राचीनरावणभाष्यस्थ इति रत्नप्रभाटीकाकारा अभिप्रयन्ति । **'द्वाभ्यां द्व्यणुकाभ्यामारब्धे कार्ये महत्त्वं दृश्यते तस्य हेतुः प्रचयो नाम प्रशिथिलावयवसंयोग इति रावणप्रणीते भाष्ये दृश्यत इति चिरन्तनवैशेषिकदृष्ट्या इदम्'** इति । (शा.भा.रत्नप्रभा-२.२.१) प्रकरणार्थविवरणाख्यायां टीकायामयमंशः स्पष्टं निरूपित इत्यपि ते कथयन्ति ।

## ३. प्रशस्तपादाः (क्रि.श.४)

प्रशस्तपादास्तु- वैशेषिकदर्शनस्य एकैकं सूत्रमुद्धृत्य पदशः न

व्याख्यातवन्तः । किन्तु वैशेषिकदर्शनविषये स्वतन्त्रमेकं प्रबन्धमेवाऽरचितवन्तः । यश्च प्रबन्धः कणादसूत्रेष्वनुक्त-नूतनविषयसङ्ग्राहकः सन् पश्चादागतानां व्याख्यानकाराणामादर्शप्रायं समजनि । कणादमहर्षिभिः 'सामान्यं विशेष इति बुद्ध्यपेक्षम्'(१.२.३) इति सूत्रेण सामान्य-विशेषसमवायाः बुद्धिसापेक्षपदार्था इति निरूपितम् । प्रशस्तपादैस्तु बाह्यार्थसन्तः ते पदार्था इति न्यरूपि । कणादैः त्रयोदशगुणाः प्रोक्ताः । प्रशस्तपादैस्तु चतुर्विंशतिगुणाः कथिताः । नूतनरीत्याऽनुमानं प्रत्यपीपदन् प्रशस्तपादाः । सजीवपदार्थानां सङ्ख्याद्यनेकपदार्थानां च क्षणिकत्वं तैः प्रतिपादितम् । तेनेदं विदितं भवति तेषामुपरि क्षणिक-वादिनां बौद्धानां गाढः प्रभाव आसीदिति । परमाणुवादस्य स्वरूपरेखा, परमाणुद्व्यणुकत्र्यणुकानां तारतम्यं चेदम्प्रथमतया ज्ञापितवन्तः प्रशस्त-पादा एव । कणादैः द्व्यणुकस्य उल्लेख एव न कृतः । परन्तु प्रशस्तपादा इदम्प्रथमतया द्व्यणुकेऽप्यणुपरिमाणमस्ति । द्व्यणुकत्र्यणुकयोः परिमाणं, परमाणुगतद्वित्वेन द्व्यणुकगतद्वित्वसङ्ख्या जायते इति इदम्प्रथमतया न्यरूरुपन् । नित्यद्रव्यव्यावर्तकत्वेनाभ्युपगतं विशेषं कणादादपि विभिन्न-रीत्या प्रशस्तपादा एव न्यरूरुपन् । वैदिकदर्शनकाराः, बौद्धदर्शनकाराः चीनीलेखकाः वैशेषिकसूत्राणि अनुल्लिख्य प्रशस्तपादभाष्यमेवोदा-हरिष्यन्तीत्येतत् प्रशस्तपादमहत्तामावेदयति । कन्दली-किरणावली-व्योमवती इत्यन्यान्यवैशेषिकटीकाग्रन्थाः प्रशस्तपादानां भाष्यमव-लम्ब्यैव प्रवृत्ताः ।

प्रशस्तपादा वात्स्यायनादपि प्राचीना इति केचन मन्यन्ते । अन्ये केचन वात्स्यायना एव प्रशस्तपादात् प्राचीना इति मन्वते । परमार्थः (क्रि.श.४९९.५६९) धर्मपालः (क्रि.श.५३९-५७०) इति

बौद्धदार्शनिकौ प्रशस्तपादभाष्यं खण्डितवन्तौ । तस्मात् प्रशस्तपादानां कालः चतुर्थशतकमिति विदुषां मतम् । वाचस्पतिमिश्राः प्रशस्तपादानां वाक्यमेकं 'पादमर्षं वचनम्' इति गौरवेणोद्धरिष्यन्ति । असत्कार्यवादः, शरीरेषु प्रतिक्षणं परिवर्तनम्, सङ्ख्या-संयोग-विभागादीनां बाह्यास्तित्वम्, सङ्ख्यादीनां व्यवस्था, इत्यादिविषये प्रशस्तपादानां योगदानं स्मरणीयमस्ति । वैशेषिकशास्त्रस्य प्रचलितदर्शनस्वरूपं प्रशस्तपादभाष्यादेवेत्युक्ते नातिशयोक्तिः ।

वैशेषिकसूत्राणां भाष्यकर्तारः प्रशस्तपादाः । प्रशस्तदेवः 'प्रशस्तचरणः' इति तेषामेव नामान्तरे । गौतम-वात्स्यायनयोरिव समानतन्त्रत्वेन कणाद-प्रशस्तपादयोरपि परमर्षित्वं कपिल-पञ्चशिखाचार्ययोरिवाऽचार्यत्वं च उदयनाचार्यकन्दलीकारशङ्करमिश्रादयः स्वीचक्रुः ।

### ४. **श्रीधराचार्यः** (क्रि.श.९९१)

वैशेषिकसम्प्रदाये सर्वेभ्यः ग्रन्थेभ्यः महत्वपूर्णः ग्रन्थः श्रीधराचार्यस्य न्यायकन्दलीनामकः। श्रीधराचार्यस्य पिता बलदेवः। माता तु अव्वोका । निवासस्तु गौडदेशापरपर्यायवङ्गदेशान्तर्गते गङ्गायाः पश्चिमे तटे भूरिसृष्टिग्रामे इति इतिहासकाराः कथयन्ति । **अद्वयसिद्धिः, तत्त्वसंवादिनी, सङ्ग्रहटीका, तत्त्वप्रबोधः** इत्यनेके ग्रन्थास्तेन कृताः । न्यायकन्दल्यामेतेषां ग्रन्थानामुल्लेखः दृश्यते । [६]न्यायकन्दली तु प्रशस्तपादभाष्यस्य विस्तृता टीका ।

### **५. शङ्करमिश्रः (क्रि.श.१५)**

अयं रघुदेवशिष्यः । अस्य पिता भवनाथः इति ।

**'याभ्यां वैशेषिके तन्त्रे सम्यग् व्युत्पादितोऽस्म्यहम् ।**
**कणादभवनाथाभ्यां ताभ्यां मम नमः सदा ॥'** ७

इति वै.सूत्रोपस्कारगतमङ्गलपद्याद् ज्ञायते । शङ्करमिश्रनाम्ना प्रथितोऽयं वैशेषिकसूत्राणामुपरि वैशेषिकसूत्रोपस्काराख्यं ग्रन्थं निर्ममे । यश्च समेषां वेशेषिकसूत्राणां प्रतिपदार्थं विवृण्वन् विदुषां बहूपकरोति । शङ्करमिश्रः '**कणादरहस्य**' नामानं भाष्याभिप्रायबोधकं ग्रन्थं, न्यायलीलावती-दीधितेर्व्याख्यानं **न्यायलीलावतीकण्ठाभरणं**, बौद्धाधिकारस्य (आत्मतत्त्वविवेकस्य) व्याख्यानं **कल्पलतानामानं** च ग्रन्थं चकार ।

## ६. व्योमशिवाचार्यः (६०५-६४५)

व्योमशिवाचार्यः आचार्यहृदयेशस्य शिष्यः । प्रशस्तभाष्यस्य टीकारूपं **व्योमवती** नामानं ग्रन्थं रचयामास । अयं न केवलं न्यायवैशेषिकादिष्वेव दर्शनेषु किन्तु बौद्धजैनादिदर्शनेष्वपि अप्रतिहतगतिरासीदिति-

**सिद्धान्तेषु महेश एष नियतो न्यायेऽक्षपादो मुनिः**
**गम्भीरे च कणाशिनस्तु कणभुक् शास्त्रे श्रुतौ जैमिनिः ।**
**साङ्ख्येऽनल्पमतिः स्वयं च कपिलो लोकायते सद्गुरुः**
**बुद्धो बुद्धमते जिनोक्तिषु जिनः को वाऽथ नायं कृती ॥**

इति ग्वालियर्राज्यस्थशिलालेखनेन ज्ञायते ।

अयमेव शिवादित्यमिश्रः यश्च 'सप्तपदार्थीनामानं ग्रन्थमकरोदिति इति केचिदाचक्षते । व्योमवतीग्रन्थे बौद्धमतखण्डनं विपुलतया दृश्यते ।

## ७. उदयनाचार्यः (क्रि.९८४)

मिथिलायामुत्पन्नः उदयनाचार्यः न्यायाचार्यत्वेन प्रथितोऽस्ति । अयं

न्यायवार्तिकतात्पर्यस्य टीकारूपं **'न्यायवार्तिकतात्पर्यपरिशुद्धि'**-नामानं ग्रन्थं **'न्यायपरिशिष्टं' 'आत्मतत्त्वविवेकं' 'न्यायकुसुमाञ्जलि'**-नामकं च ग्रन्थमकरोत् । प्रशस्तपादकृतभाष्यस्य व्याख्यानरूपं किरणावलीनामकं ग्रन्थं चायं रचितवान् । ईश्वरस्यास्तित्वं समर्थयन्तो वादयुद्धे नैकान् वादिनोऽजयन् उदयानाचार्याः । देवे प्रतिकूले सति भगवन्तमुद्दिश्य एवं कथयन्ति ।

**'ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्तसे ।**
**उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ॥'** इति ।

### ८. जगदीशभट्टाचार्यः

जगदीशभट्टाचार्यः भवानन्दशिष्यः । प्रशस्तपादकृतभाष्यस्य **भाष्यसूक्ति**नामानं व्याख्यानमकरोत् । **१.शब्दशक्तिप्रकाशिका २.तर्कामृतम् ३.दीधितेः रहस्यनाम्नी टीका** इत्यादयस्तस्येतरग्रन्थाः ।

### ९. वर्धमानोपाध्यायः

अयं गङ्गेशोपाध्यायस्य पुत्रः । मिथिलादेशे दर्भाङ्गमण्डलान्तर्गतं 'करिजन' इत्याख्यग्रामं स्वजन्मनाऽयमलञ्चकार । उदयनाचार्यकृत-किरणावल्याः व्याख्यानरूपं **किरणावलीप्रकाश**नामानं ग्रन्थमयं रचितवान् । एवं न्यायलीलावत्याः '**प्रकाश**नामकं व्याख्यानं, उदयनाचार्य-कृतन्यायपरिशिष्टस्य **प्रकाशं**, गौतमसूत्रस्य तत्त्वचिन्तमण्यादीनां व्याख्यां व्यधात् ।

### १०. भगीरथठक्कुरः

भगीरथठक्कुरः मिथिलादेशीयः । पक्षधरमिश्राणां शिष्यः । अयं वर्धमानोपाध्यायकृतानां प्रकाशग्रन्थानां (किरणावलीप्रकाशादीनां)

व्याख्यारूपान् **द्रव्यप्रकाशिकागुणप्रकाशिकादिनाम्नो** ग्रन्थान् (**कुसुमाञ्जलिप्रकाशप्रकाशिकान्यायलीलावतीप्रकाशप्रकाशिकादीन्** चकार ।)

### ११. अन्ये ग्रन्थकाराः

एवं, मल्लिनाथः, शिवमणिभट्टाचार्यः, श्रीवत्सः इत्यनेके ग्रन्थकाराः स्वव्याख्याभिः वैशेषिकदर्शनं समवर्धयन् । मल्लिनाथस्य **भाष्यनिकषः**, शिवमणिभट्टाचार्यस्य **गुणदीधितिः**, श्रीवत्सविरचिता **लीलावती**, एवमुदयानाचार्यकिराणवलीमादर्शीकृत्य पद्मनाभमिश्रेण कृतः **सेतुः**, **श्रायस्ककृताव्याख्या**, **वैशेषिकसूत्रवृत्तिः**, **कणादसूत्रनिबन्धः (भट्ट-वादीन्द्रवार्तिकं)**, **जयनारायणविवृतिः**, **चन्द्रकान्ततर्कालङ्कार-भाष्यम्**, **रघुदेवव्याख्यानम्**, **वैशेषिकवृत्तिश्चेति** अन्यान्यग्रन्थाः वैशेषिकदर्शने स्मर्यन्ते । अत्रोल्लिखिताः बहवो ग्रन्था अमुद्रिता अनुपलब्धा वा इत्येतद् दुःखावहोऽयं विषय इत्यलं पल्लवितेन ।

## ४. मुक्तिस्वरूपम्

आत्यन्तिकी दुःखनिवृत्तिः मुक्तिरिति वैशेषिकाः । तथा चोक्तं शङ्करमिश्रेण वैशेषिकसूत्रोपस्कारे- **‘यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः’**[८] इति सूत्रव्याख्यावसरे ‘निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः’ इति । वृत्तिकृतस्तु [९]एककालीनसकलात्मविशेषगुणध्वंसः मुक्तिरित्याहुः । प्रशस्तपादैस्तु मङ्गलपद्ये ‘महोदय’ शब्देन मुक्तिरुपवर्णिता । न्यायकन्दल्यां तु ‘ननु भोः क एष महोदयो नाम ? इति मुक्तिस्वरूपचर्चा दरीदृश्यते । ‘सवासनसमुच्छेदो ज्ञानोपरमः महोदयः (मुक्तिः) इति बौद्धा आचक्षते । तन्न समीचीनम् । सर्वतः

प्रियतमस्याऽत्मनः समुच्छेदाय कः प्रेक्षावान् प्रवृत्तिं कुर्यात् ? बन्धविच्छेदपर्यायस्य मुक्तिशब्दस्यातदर्थत्वाच्च । प्रकृति-पुरुषविवेकदर्शनाद् उपरतायां प्रकृतौ पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति साङ्ख्याः प्रचक्षते । तन्न चारु । प्रवृत्तिस्वभावायाः प्रकृतेः औदासीन्यस्यायुक्तत्वात् । पुरुषार्थनिबन्धना तस्याः प्रवृत्तिः । प्रकृतिपुरुषविवेकश्च पुरुषार्थः । तस्यां सञ्जातायां सा निवर्तत कृतकृत्यत्वादिति चेन्न । अस्या अचेतनाया विमृश्यकारित्वाभावात् ।

नित्यनिरतिशयसुखाभिक्तिः मुक्तिरित्यपरे । तदप्यसारम् । तथा हि- 'विषयसम्भोगजं सुखं तावत् क्षणिकविनाशि दुःखबहुलं स्वर्गादिपदप्राप्यमपि सप्रक्षयं सातिशयञ्च । तथा च कस्यचित् स्वर्गमात्रमपरस्य स्वर्गराज्यम् । अतस्तदपि सततं प्रच्युतिशङ्कया परसमुत्कर्षोपतापाच्च दुःखाक्रान्तं न निश्चितं श्रेयः । आत्यन्तिकी दुःखनिवृत्तिः असह्यसंवेदननिखिलदुःखोपरमरूपत्वाद् अपरावृत्तेश्च निश्चितं श्रेयः ।

एतेन 'विशेषगुणनिवृत्तिलक्षणा मुक्तिः' ज्ञानस्वरूपिण आत्मनः अत्यन्तमुच्छेदो मुक्तिः इति बौद्धोक्तमुक्तितः न भिद्यते' इति मण्डनोक्तं प्रत्युक्तम् । विशेषगुणोच्छेदे हि सत्यात्मनः स्वरूपेणावस्थानं नोच्छेदः, नित्यत्वात् । न चायमपुरुषार्थः, समस्तदुःखोपरमस्य परमपुरुषार्थत्वात् । समस्तसुखाभावादपुरुषार्थत्वमिति चेन्न । सुखस्यापि क्षयितया बहुलप्रत्यनीकतया च साधनप्रार्थनाशतपरिश्लिष्टतया च सदा दुःखाक्रान्तस्य विषमिश्रस्येव मधुनो दुःखपक्षे निक्षेपात् ।

वैशेषिकसूत्रोपस्कारे शङ्करमिश्रेण मुक्तिस्वरूपचर्चा एवं व्यधायि । दुःखनिवृत्तिः न पुरुषार्थः, आनागतदुःखनिवृत्तेरशक्यत्वात् । अतीतदुःखस्यातीतत्वाद् वर्तमानदुःखस्य पुरुषप्रयत्नमन्तरेणैव

निवृत्तेरिति चेन्न । संसारहेतूच्छेदे पुरुषव्यापारात् । तथा हि सवासनं मिथ्याज्ञानं संसारहेतुः तदुच्छेदश्चाऽत्मतत्वज्ञानात् तत्वज्ञानं च योगविधिसाध्यमिति तदर्थं प्रवृत्त्युपपत्तेः । ननु मीमांसकोक्तरीत्या नित्यसुखाभिव्यक्तिरेव मुक्तिरिति किं न स्यादिति चेन्न । नित्यसुखे प्रमाणाभावात् । यदि 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिरेव तत्र प्रमाणमित्युच्यते । तर्हि नित्यं तदभिव्यक्तेः मुक्तसंसारिणोरविशेषापातात् । अभिव्यक्तेरुत्पाद्यत्वेन तन्निवृत्तौ पुनःसंसारापत्तेश्च ।

ब्रह्मात्मनि जीवात्मलयो मुक्तिरिति चेन्न । लयो यद्येकीभावस्तदा बाधः। नहि द्वयमेकं भवति । लिङ्गशरीरापगमो लयः, लिङ्गं चैकादशेन्द्रियाणि तेषां शरीरस्य च विगमो लय इति चेन्न । एतावता दुःखसामग्रीविरहस्योक्तत्वात् । तथा च दुःखाभाव एव मुक्तिरिति पर्यवसानात् ।

एतेनाविद्यानिवृत्तौ केवलात्मस्थितिर्मुक्तिः, आत्मा च विज्ञानसुखात्मक इत्येकदण्डिमतमपास्तम् । आत्मनो ज्ञानत्वे सुखत्वे च प्रमाणाभावात् । न च 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिर्मानम् । तस्या ज्ञानवत्त्वानन्दवत्त्वप्रतिपादकत्वाद् भवति हि 'अहं जाने' 'अहं सुखी' इति प्रतीतिः, न तु अहं ज्ञानमहं सुखमिति । किञ्च ब्रह्मणः इदानीमपि सत्वात् मुक्तसंसारिणोरविशेषापत्तिः ।

अविद्यानिवृत्तेश्चापुरुषार्थत्वाद् ब्रह्मणश्च नित्यत्वेनासाध्यत्वात् तत्साक्षात्कारस्य तदात्मकत्वेनासाध्यत्वाद् एवमानन्दस्यापि तदात्मकत्वेनासाध्यत्वमेवेति तदर्थं प्रवृत्यनुपपत्तिरेव । निरुपप्लवा चित्सन्ततिर्मुक्तिरिति चेन्न । दुःखादिरूपस्य उपप्लवस्य विगमो यदि निरुपप्लवत्वं तदा तन्मात्रस्यैव पुरुषार्थत्वेन चित्सन्ततेरनुवृत्तौ

प्रमाणाभावः । तदनुवृत्तेरपि शरीरादिसाध्यत्वेन संसारानुवृत्तेरावश्यकत्वादिति सिद्धं दुःखनिवृत्तिरेवोक्तरूपा निःश्रेयसमिति ।

## मुक्तिसाधनानि

द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां षण्णां पदार्थानां ज्ञानं मुक्तिसाधनम् । तथा च प्रशस्तपादभाष्यम्- द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुरिति । तथा च कणादसूत्रम्- '**धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्**'[१०] इति । इह जन्मनि प्राकृतने जन्मनि वा आर्जितात् सुकृतात् तेन प्रसूतात् उत्पादितात् तत्त्वज्ञानान्मोक्षो भवति । षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां सम्पन्नं ज्ञानं मुक्तिसाधनमिति फलितार्थः । अत्र साधर्म्यं समानधर्मवत्त्वं वैधर्म्यं इतरावृत्तिधर्मवत्त्वम् । अनयोर्ज्ञानमिह विवक्षितम् । साधर्म्यज्ञानेन वैधर्म्यज्ञानेन च सम्पन्नं यत् एषां पदार्थानां तत्त्वज्ञानं तदेव मुक्तिसाधनमित्यर्थः । पृथिवी रसवत्त्वेन अद्भिः समाना । स्पर्शवत्त्वेन अप्तेजोवायुभिः समाना । अनुष्णाशीतस्पर्शवत्त्वेन अप्तेजोभ्यां समाना वायुना समाना च । गन्धवत्त्वेन स्वेतरैः सर्वैः पदार्थैः असमाना इत्येवं साधर्म्यवैधर्म्यचिन्तया पृथिव्याः यत्तत्वं तस्य ज्ञानं सम्पद्यते । एवमन्यत्रापीति द्रष्टव्यम् । एवं षण्णां पदार्थानां ज्ञानेन परमपुरुषार्थो मोक्षो भवतीति वैशेषिका अभिप्रयन्ति । नैयायिकास्तु षोडशपदार्थज्ञानान्मुक्तिरिति कथयन्ति ।

## ९. प्रमाणानि

प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः । लौकिकमार्षं चेति द्विविधं प्रमाणमिति साङ्ख्या मन्यन्ते । तत्र लौकिकं प्रत्यक्षानुमानाप्तवचनानि ।

आर्षं विज्ञानम् । प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानीति नैयायिकाः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानीति प्राभाकराः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट्प्रमाणानीति भाट्टा वेदान्तिनश्च । प्रत्यक्षमनुमाने च द्वे प्रमाणे इति कणादप्रधाना वैशेषिका मन्यन्ते । अस्मिन् मते शब्दो-पमानयोरनुमानविधयैव प्रामाण्यं न तु स्वातन्त्र्येणेति ज्ञेयम् । तथा च वैशेषिकसूत्रम्- **'एतेन शाब्दं व्याख्यातम्'**[११] इति (वैशेषिकसूत्रम्-९.२.३) यथा प्रत्यक्षेणानुपलभ्यमानो वह्निः उत्तरकाले प्रत्यक्षविषयीभूतधूमरूपलिङ्गेन अनुमीयते तथा श्रोत्रप्रत्यक्षेन करणेन शब्देन अप्रत्यक्ष्यमाणार्थबोधो भवति । तस्माच्छब्दोऽनुमानमेव । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति प्रयोजकवृद्धवाक्य-श्रवणानन्तरं प्रयोज्यवृद्धा अनुमिमते । इमानि पदानि स्वस्मारितपदार्थसंसर्ग-ज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् । गामानय इति पदक-दम्बकवत् इति । तथा च अनुमानविधयैव शब्दस्य प्रामाण्यमिति वैशेषिकाणामाशयः । अनुपपद्यमानार्थदर्शनात् तदुपपादके बुद्धिः अर्थापत्तिः। यथा जीवंश्चैत्रो गृहे नास्तीति ज्ञाने तस्य बहिर्भावज्ञानम् । एतदपि अनुमान एव अन्तर्भवति । चैत्रो बहिरस्ति जीवनवत्वे सति गृहेऽसत्वात् यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्ति । यथाऽहमिति ।

एवमुपमानमपि न पृथक् प्रमाणम् । तस्याप्यनुमानेऽन्तर्भावात् । तथा हि- गवयो गवयपदवाच्यः गोसादृश्यात् । यो गवयपदवाच्यो न भवति नासौ गोसदृशः, गोसदृशश्चायं तस्मात् गवयपदवाच्य इत्यनुमान-प्रयोगोऽत्र विवक्षितः । तथा गवयपदवाच्यत्वव्याप्यगोसादृश्यज्ञान-वानयमिति परामर्शात् जायमानात् गवयो गवयपदवाच्य इति प्रमा

अनुमितिरेव । प्रत्यक्षमनुमानं चेति प्रमाणद्वयमेवेति बौद्धाः आर्हताश्च कथयन्ति । **व्योमशिवाचार्यस्तु- प्रत्यक्षमनुमानं शब्दश्चेति प्रमाण-त्रयमिति** मन्यते । अनुपलब्धेः एतन्मते प्रत्यक्षेऽन्तर्भावोऽवगन्तव्यः ।

## ६. प्रधानतत्त्वानि

द्वित्वोत्पत्ति-पाकजोत्पत्त्यादिविषये वैशेषिकाणां विशिष्टं दायित्वं वर्तते । तस्मात् प्रथमतः तन्निरूप्यते ।

### अ. द्वित्वोत्पत्तिप्रकारः

यदा घटादिद्वयमेकत्र मिथः सन्निहितं भवति तदानीमेव तत्र द्वित्वसङ्ख्या उत्पद्यते । पश्चादिन्द्रियसन्निकर्षानन्तरं 'अयमेकः अयमेकः' इत्यपेक्षाबुद्ध्या द्वित्वं ज्ञायते । तथा चापेक्षाबुद्धिः द्वित्वस्य व्यञ्जिका न तूत्पादिका इति मीमांसका मन्वते । वैशेषिकास्तु अज्ञाताया द्वित्वादिसङ्ख्याया अङ्गीकरणं निरर्थकमिति कृत्वा अपेक्षाबुद्धिरेव द्वित्वादेरुत्पादिका इति कथयन्ति । तन्मते इन्द्रियार्थ-सन्निकर्षमारभ्य संस्कारपर्यन्तानां अष्टसु क्षणेषु क्रमशः उत्पत्तिः-

१. प्रथमक्षणे इन्द्रियस्य घटद्वयेन सह सन्निकर्षः ।

२. द्वितीये एकत्वजातिज्ञानम् ।

३. तृतीयक्षणे अयमेकोऽयमेक इत्यपेक्षाबुद्धिः ।

४. चतुर्थे द्वित्वसङ्ख्योत्पत्तिः ।

५. पञ्चमे द्वित्वजातिज्ञानम् ।

६. षष्ठे द्वित्वसङ्ख्याज्ञानम् ।

७. सप्तमे 'इमौ द्वौ घटौ' इत्यादिद्वित्वसङ्ख्याविशिष्टद्रव्यज्ञानम् ।

८. अष्टमे तादृशज्ञानजन्यः संस्कार आत्मनि उत्पद्यते ।

तथा चोक्तम्-

**‘आदाविन्द्रियसन्निकर्षघटनाद् एकत्वसामान्यधीः ।**
**एकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते ।**
**द्वित्वत्वप्रमितिस्ततो तु परतो द्वित्वप्रमानन्तरम् ।**
**द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया । इति ।**

द्वित्वादेरपेक्षाबुद्धिजन्यत्वे प्रमाणं तु ‘अपेक्षाबुद्धिः द्वित्वादेरुत्पादिका भवितुमर्हति । व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वात् । शब्दं प्रति संयोगवदिति । व्यङ्ग्योऽर्थो व्यञ्जकमपेक्षते । तथोत्पाद्योऽर्थः उत्पादकमपेक्षते । प्रकृते द्वित्वादिसङ्ख्याऽपेक्षाबुद्धिमपेक्षते । अपेक्षाबुद्धिश्च न द्वित्वादिव्यञ्जिका । अपेक्षाबुद्धेः पूर्वं द्वित्वादिसत्त्वे मानाभावात् । मेयसिद्धेश्च मानाधीनत्वात् । तथा यत्र व्यञ्जकत्वाभावसहकृतमपेक्षमाणत्वं तत्रोत्पादकत्वं यथा शब्देनापेक्षमाणे कण्ठादिस्थाने वायुसंयोगे शब्दोत्पादकत्वमिति व्याप्त्याऽपेक्षाबुद्धेः द्वित्वाद्युत्पादकत्वं सिध्यति ।

अत्रायं विशेषो ज्ञेयः । यद्यपि ज्ञानानां द्विक्षणमात्रावस्थायित्वं, योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वनियमात् । तथाऽप्यपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं कल्प्यते । तस्या अपि क्षणद्वयमात्रावस्थायित्वाङ्गीकारे द्वित्वनिर्विकल्पकप्रत्यक्षकाले तन्नाशात् द्वित्वसविकल्पककाले द्वित्वनाशात् विषयभावेन द्वित्वप्रत्यक्षं न स्यात् । विद्यमानस्यैव चक्षुरादिना ज्ञानजननाभ्युपगमात् । अतः द्वित्वप्रत्यक्षमपेक्षाबुद्धेर्नाशकमित्यभ्युपगम्य तस्याः त्रिक्षणावस्थायित्वमभ्युपगन्तव्यम् । कालान्तरे द्वित्वप्रत्यक्षाभावाद् अपेक्षाबुद्धिनाशाद् द्वित्वनाश इति ।

## आ. पाकजोत्पत्तिः

द्रव्येषु विलक्षणतेजःसयोगेन रूपरसादीनां परावत्तिः क्वचिद् दृश्यते। यथा श्यामो घटः तेजःसयोगेन रक्तो भवति। हरिद्वर्णयुक्तम् आम्रकदल्यादिफलं तेजःसंयोगेन पीतं भवति। एवं पक्वं फलं क्वचिन्मधुरं गन्धान्तरेण सहितं मृदु च भवति। तत्र तेजःसंयोगेन घटाद्यवयवानां कपालानां वियोगेन विनाशेन वा घटनाशः। कपालानामपि तदवयववियोगेन विनाशेन वा नाशः। एवं त्र्यणुकपर्यन्तं नाशः। द्व्यणुकस्य तु नावयवनाशेन नाशः। तदवयवानां परमाणूनां नित्यत्वात् किन्तु परमाण्वोर्मिथो वियोगेन। ततो विशकलितेषु परमाणुषु पूर्वरूपरसादिनाशेनान्योन्य-रसाद्युत्पत्तौ च सत्यां पुनस्तेषां परमाणूनां द्व्यणुकत्र्यणुकादिरूपेण नवो घटादिर्जायते। एषा पीलुपाकक्रिया वैशेषिकाणाम्। पीलुः परमाणुः, तत्रैव तैः पाकजन्यगुणपरावृत्तेः अभ्युपगमात्। अवयविनि घटादौ द्व्यणुकत्र्यणुकादौ वा ते पाकं नाभ्युपगच्छन्ति।

तेषामयमाशयः। अतिवेगवता तेजसा परमाणूनामभिघातसंयोगे सति परमाणुषु पूर्वघटनाशकक्रियाविभागादिक्रमेण पूर्वनीलघटस्य नाशे स्वतन्त्रेषु परमाणुषु पुनः रक्तघटारम्भकक्रियाविभागादिक्रमेण पूर्व-नीलघटस्य नाशे स्वतन्त्रेषु परमाणुषु पुनः रक्तघटारम्भकक्रिया-विभागादिक्रमेण रक्तघटः उत्पद्यते। परमाणुषु पूर्वनीलघटनाश-क्रियाक्षणमारभ्य घटान्तरे रक्तरूपोत्पत्तिपर्यन्तं क्षणप्रक्रिया निरूप्यते। १. वह्नेरभिघातसंयोगात् प्रथमं परमाणुषु नीलघटनाशकक्रिया। २. ततो विभागद्वारा द्व्यणुकारम्भकसंयोगनाशः। ३. ततः असमवायिकारण-संयोगनाशाद् द्व्यणुकनाशः, तदनु त्र्यणुकनाशादिक्रमेण घटनाशः।

'आश्रयनाशात् आश्रयिनाशः' इति न्यायानुसारेण ४. ततः परमाणुगतनीलरूपनाशः । ५. ततः स्वतन्त्रेषु परमाणुषु रक्तरूपोत्पत्तिः । ततः रक्तरूपविशिष्टेषु स्वतन्त्रेषु परमाणुषु द्व्यणुकारम्भकानुगुणक्रिया । ७. ततः परमाणूनां देशान्तरेण विभागः । ८. ततः पूर्वदेशसंयोगनाशः । ९. ततः परमाणुद्वये रक्तद्व्यणुकारम्भकसंयोगः । १०.ततः द्व्यणुकोत्पत्तिः । ११. ततः द्व्यणुके रक्तरूपोत्पत्तिः । १२. एवं क्रमेण त्र्यणुकतद्रूपचतुरणुकतद्रूपोत्पत्तिः ज्ञेया । एतन्मते 'सोऽयं घट' इति प्रत्यभिज्ञा न वास्तवघटाभेदविषयिणी, किन्तु घटत्वजात्यालम्बनैव । अत्र पूर्वोत्तरघटयोः भेदात् ।

### इ. पिठरपाकः

अवयविनि अवयवेषु च पाकमङ्गीकुर्वन्तो नैयायिका एवं कथयन्ति । परमाणूनां तेजसाऽभिघातसंयोगे जाते नियमेन परमाणुषु द्रव्यनाशकक्रिया जायत इत्यत्र मानाभावेन अवयविन्यपि पाकोऽभ्युपगन्तव्यः । अत एव 'सोऽयं घटः' इति प्रत्यभिज्ञा प्रमात्मिकेति वक्तुं शक्यते पूर्वोत्तरघटयोरभेदात् । अत्र च क्षणप्रक्रिया यथा- १. प्रथमक्षणे वेगातिशयवता तेजसा सह अवयवेषु अवयविषु च एकदैव तेजःसंयोगः । २. ततः तेषु पूर्वश्यामादिरूपनाशः । ३.ततः सर्वत्रैव रक्तरूपोत्पत्तिः इति ।

### ई. विभागजविभागः

**'एतेन विभागो व्याख्यातः'**[१२] इति सूत्रोक्तरीत्या विभागस्त्रिविधः । १. अन्यतरकर्मजः २.उभयकर्मजः ३.विभागजविभागश्चेति । १. पर्वतात् श्येनस्य विभागः अन्यतरकर्मजः । २. मेषयोः मल्लयोर्वा मिथो विभागः उभयकर्मजः । ३. हस्तपुस्तकविभागात् कायपुस्तकविभागः विभागजविभागः ।

## ७. वैशेषिकदर्शनस्य सामान्यपरिचयः

वैशेषिकदर्शने **'द्रव्यगुणकर्मसामान्यविशेषसमवायाः'** इति षडेव पदार्थाः । तथा च कणादसूत्रम्- **'धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्'** (वै.सू. १.१.४) इति । एवं पदार्थसङ्ग्रहापरपर्यायप्रशस्तपादभाष्येऽपि पदार्थाः षडेव परिगणिताः ।

ननु षडेव पदार्था इति कथं सङ्गच्छते । अभावस्यापि सद्भावादिति चेन्न । नञर्थानुल्लिखित-धीविषयतया भावरूपतया षडेव पदार्था इति विवक्षितत्वात् । इति सर्वदर्शनसङ्ग्रहे सायणामाधवोऽभिप्रैति । अत्र नञर्थो निषेधः । तदुल्लिखिता धीः नास्तीत्येवमभावरूपेण जायमाना धीः तादृशधीविषयीभूतः सप्तमपदार्थोऽस्तु अभावरूपो नाम । अस्तीत्येवं भावरूपेण प्रतीयमानास्तु द्रव्यादयः षडेवेति वैशेषिकाणामाशः । 'भूतले घटो नास्ति' इत्यत्राभावस्य निषेधात्मकतया प्रतीतावपि शशविषाणादिवद् अभावः नात्यन्तासत् । एतेन अभावाख्यान्यपदार्थः वैशेषिकाणामपि सम्मत इति ज्ञायते । कणादप्रशस्तपादयोरनन्तरमागताः वैशेषिकाः पदार्थेषु अभावमप्यन्तर्भावयन्ति ।

### द्रव्यनिरूपणम्

एतन्मते द्रव्याणि तार्किकोक्तरीत्या नवैव । तथा च कणादसूत्रम्-

**'पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ।'** (वै.सू.१.१.५.) तथा प्र.भाष्यम्- तत्र द्रव्याणि 'पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामन्यविशेषसञ्ज्ञयोक्तानि नवैवेति' । तमोऽतिरिक्तद्रव्यमिति भाट्टा वेदान्तिनश्च भणन्ति । परन्तु एते तार्किकादिवद् आलोकाभाव एव तम इति कथयन्ति ।

## गुणनिरूपणम्

रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाणपृथक्त्वसंयोग-विभाग-परत्वापरत्व-बुद्धि-सुख-दुःखे-च्छाद्वेषप्रयत्नाः' इति सप्तदश गुणाः कणादेन कण्ठोक्ताः । तथा च कणादसूत्रम्- **'रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ।'**[१३] इति । अत्र कणादेन कण्ठोक्ताः सप्तदशगुणाः । स्नेह-शब्द-गुरुत्व-द्रवत्व-धर्माधर्मसंस्काराख्याः सप्त गुणाः चशब्देन समुच्चीयन्ते । तथा च प्रशस्तपादभाष्यम्- चशब्दसमुच्चिताश्च गुरुत्व-द्रवत्व-स्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः इति । ननु शौर्यौदार्यकारुण्यदाक्षिण्यौग्र्यादीनामितरगुणानां सत्वात्कथं चतुर्विंशतिर्गुणा इत्युच्यते । इति चेदित्थम्- शौर्यादयोऽत्रैवान्तर्भवन्ति । शौर्यो बलवतोऽपि परस्य पराजयाय प्रत्युत्साहः । स च प्रयत्नविशेष एव । सततं सन्मार्गवर्तिनी बुद्धिरौदार्यम् । परदुःखप्रहाणेच्छा कारुण्यम् । तत्त्वाभिनिवेशिनी बुद्धिर्दाक्षिण्यम् । औग्र्यमात्मन्युत्कर्षप्रत्यय इत्येवं सूपपादितं श्रीधराचार्येण न्यायकन्दल्याम् ।

## कर्मनिरूपणम्

उत्क्षेपणादिभेदेन पञ्चैव कर्माणि । तथा च कणादसूत्रम्- **'उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि'**[१४] उत्क्षेपणं नाम कस्यचिद् वस्तुनः ऊर्ध्वदेशसंयोगानुकूलो व्यापारः । अपक्षेपणं कस्यचिद् वस्तुनः अधोदेशसंयोगानुकूलो व्यापारः । आकुञ्चनं कस्यचिद् वस्तुन अग्रभागस्य मूलभागसामीप्यानुकूलो व्यापारः । प्रसारणं - कस्यचिद् वस्तुनः अग्रभागस्य मूलभागाद् विप्रकर्षानुकूलो व्यापारः । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणमिति

केचिद् अभिप्रयन्ति । वक्रतासम्पादकं कर्म आकुञ्चनम् । ऋजुतासम्पादकं कर्म प्रसारणमित्यपरे । स्वावस्थानदेशाद् देशान्तरसंयोगजनकः व्यापारो गमनमित्युच्यते । ननु भ्रमण-रेचनादीनामन्येषां कर्मणां सत्त्वात् कथं पञ्चैवेति चेन्न । भ्रमण-रेचन-स्यन्दनोर्ध्वज्वलन-तिर्यक्पतन-नमनोन्नयनादीनां गमन एवान्तर्भावात् पञ्चैव कर्माणि ।

## सामान्यनिरूपणम्

परापरभेदेन सामान्यं द्विविधम् । तथा चोक्तं प्रशस्तपादभाष्ये-सामान्यं द्विविधम् - परमपरं चाऽवृत्तिप्रत्ययकारणम् । परं सत्ता महाविषयत्वात् । द्रव्यत्वाद्यपरम् । अल्पविषयत्वादिति ।

## विशेषनिरूपणम्

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । ते खलु अत्यन्तव्यावृत्तिहेतुत्वाद् विशेषा एव। (प्र.पा.भाष्यम्) 'नित्यद्रव्येष्वेव वर्तन्ते एव ये ते विशेषाः' इति । नित्यद्रव्येष्वेव' इत्यनेन द्रव्यगुणकर्मसामान्यानां व्यवच्छेदः । द्रव्यगुणकर्माणि द्रव्येष्वेव वर्तन्ते । न नित्येष्वेव 'अर्थाद् अनित्यद्रव्येष्वपि गुणादिष्वपि वर्तन्ते इति 'नित्यद्रव्येष्वेव' इत्यनेन सामान्यस्य व्यवच्छेदः । नित्यद्रव्येष्वेव वर्तन्त एव' इत्यनेन शब्द-बुद्ध्योर्निरासः भवति । शब्दादिकं यद्यपि नित्यद्रव्येषु वर्तते । तथाऽपि समस्तनित्यद्रव्येषु नास्ति इति न्यायकन्दल्यां सूपादितं श्रीधराचार्येण । 'नित्यद्रव्यवृत्तयः' इति 'अन्त्या' इति पदेन विवृतम् । उत्पत्तिविनाशयोरन्ते व्यवस्थिततत्वाद् नित्यद्रव्याणि अन्त्यशब्दवाच्यानि भवन्ति । पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं नित्यद्रव्याणि । तद्वृत्तयोऽन्त्या विशेषाः[१५] । तथा चोक्तम्- 'अन्त्यो नित्यद्रव्यवृत्तिः विशेषः परिकीर्तितः' इति ।

ननु विशेषसद्भावे का युक्तिरिति चेद्- उच्यते । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात् परस्परं भेदो भवति । एतद्धटः तद्घटभिन्नः एतत्कपालारब्धत्वात् एतत्कपालः तत्कपालभिन्नः । एतत्कापालिकारब्धत्वाद् इत्येवं, एतद् द्व्यणुकं तद्द्व्यणुकभिन्नं एतत्परमाणुसमवेतत्वात् इति रीत्या भेदः सिध्यति । परमाणूनां तु निरवयवत्वेन तेषां परस्परं भेदसाधनाय विशेषमभ्युपगच्छामः । तथा च एतत्परमाणुः तत्परमाणुभिन्नः एतद्विशेषात् इत्यनुमानेन परमाणुषु परस्परं भेदः सिध्यति । अन्यथा परमाणूनां परस्परं भेदासिद्धौ द्व्यणुकादीनामपि तदसिद्ध्या घटादीनां भेदासिद्धिर्न स्यात् । अयमेवाऽशयः आविष्कृतः मुक्तावलीकृता- **'घटादीनां द्व्यणुक-पर्यन्तानां तत्तदवयवभेदात् परस्परं भेदः । परमाणूनां परस्परभेदको विशेष एव । स तु स्वतो व्यावृत्तः । तेन तत्र न विशेषान्तरापेक्षा'** इति ।

नव्यवैशेषिकाणामयमाशयः । यदि नित्यद्रव्येषु निरवयवेषु व्यावर्तकत्वेन विशेषोऽभ्युपगम्यते, स च स्वतोव्यावृत्त इति चाभ्युपगम्यते तर्हि परमाणुप्रभृतीनि सर्वाणि निरवयवद्रव्याण्येव स्वतो व्यावृत्तानीति कुतो नाङ्गीक्रियन्ते । तथा च नित्यद्रव्येषु स्वतोव्यावर्तकविशेषाङ्गीकारो व्यर्थ इति तेषामाशयः ।

**समवायनिरूपणम्**

अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्धः इह प्रत्ययहेतुः स समवायः । (प्र.पा.भाष्यम्- पृ.सं.३७) यथा तन्तुपटयोः । 'अयुतसिद्धयोः सम्बन्धः समवायः इत्युक्ते 'धर्मस्य सुखस्य च यः कार्यकारणभावलक्षणः सम्बन्धः, सोऽपि समवायः स्यात् ।

तयोरात्मैक्याश्रितयोः युतसिद्ध्यभावात् । तदर्थमाधार्याधारभूतानामिति पदम् । न तु आकाश-शकुनिसम्बन्धनिवृत्त्यर्थम् । अयुतसिद्धपदेनैव तस्य निवर्तितत्वात् । एवमप्याकाशस्याकाशपदस्य च वाच्यवाचकभावः समवायः स्यात् । तन्निवृत्यर्थमिहप्रत्ययहेतुरिति । वाच्यवाचकभावे हि तस्माच्छब्दात् तदर्थो ज्ञायते न तु इहेदमिति । आधार्याधार-भूतानामिहप्रत्ययहेतुरित्येतावता कुण्डबदरसम्बन्धो न व्यवच्छिद्यते । तदर्थमयुतसिद्धानामिति दलकृत्यं न्यायकन्दल्यां श्रीधराचार्येण सूपपादितम् । तथा चायं फलितार्थः । अवयविगुणक्रियाजातिविशेषाणां कदाचिदपि अवयवगुणिक्रियावद्व्यक्तिनित्यद्रव्याणि विहाय पृथगव-स्थितेरभावात् अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति अयुतसिद्धपञ्चकं ज्ञेयम् । तथा चोक्तम्-

**'घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः'** ।। इति ।

समवायसत्वे प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिः विशेषण-विशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्ट-बुद्धिवदित्यनुमानम् । पृथक्सिद्धयोः द्रव्ययोरेव संयोग इति नियमात् अत्र संयोगबाधात् समवायसिद्धिः ।

## अभावनिरूपणम्

यद्यपि कणाद-प्रशस्तपादाभ्यां कण्ठतः षडेव पदार्था निरूपिता नाभावो निरूपितः । तथाऽपि पश्चादागतैः वैशेषिकैः पदार्थविभागावसरे अभावः सप्तमपदार्थत्वेन परिगणितः । एतन्मते पदार्थः द्विविधः भावोऽभावश्चेति । भावः पूर्वोक्तरीत्या षड्विधः । अभावः द्विविधः

संसर्गाभावोऽन्योन्याभावश्चेति । संसर्गाभावस्त्रिविधः प्रागभावः प्रध्वंसा-भावोऽत्यन्ताभावश्चेति । तत्र अनादिः सान्तः प्रागभावः । घटोत्पत्तेः पूर्वं कपाले इह घटो भविष्यतीति प्रतीत्या प्रागभावः सिध्यति । प्रागभावाप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य परिष्कृतं लक्षणम् । विशेष्यमात्रोक्तौ घटादौ, विशेषणमात्रोक्तौ गगनादौ च अतिव्याप्तिः । अतो दलद्वयं न व्यर्थमिति ज्ञेयम् । सादिरनन्तः प्रध्वंसाभावः । प्रागभावप्रतियोगित्वे सति - ध्वंसाप्रतियोगित्वमिति परिष्कृतलक्षणम् । दण्डताडनेन घटादिध्वंसजननात् उत्पन्नस्य ध्वंसस्य पुनर्ध्वंसाभावाद् दलद्वयस्य लक्ष्ये समन्वयः । विशेष्यमात्रोक्तौ गगनादौ, विशेषणमात्रोक्तौ घटादावतिव्याप्तिः । अतः दलद्वयं सार्थकम् ।

त्रैकालिकसंसर्गाभावोऽत्यन्ताभावः । त्रैकालिकत्वं नित्यत्वम् । तच्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वम् । एवं च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सति अभावत्वमिति अत्यन्ता-भावस्य परिष्कृतं लक्षणम् । ध्वंसप्रागभावान्योन्याभावा-काशादिवारणाय क्रमेण दलचतुष्टयमित्यवगन्तव्यम् । इह भूतले घटो नास्तीति प्रतीत्याऽत्यन्ताभावः सिध्यति । तादात्म्यावच्छिन्न-प्रतियोगिताकाभावोऽन्योन्याभावः । यथा घटः पटो नेति ।

## ८. विश्वसृष्टिः

'प्राणिनां भोगभूतये (सुखदुःखानुभवाय) यदा महेश्वरः सिसृक्षति तदा सर्वेष्वात्मसु गता अदृष्टाः वृत्तिं लभन्ते । वृत्तिलब्धाश्चादृष्टाः आत्माणुसंयोगानपेक्षन्ते । आत्माणुसंयोगेभ्यः पवनपरमाणुषु कर्माण्यु-त्पद्यन्ते । अत्र पवनपरमाणवः समवायिकारणम् । लब्धवृत्त्यदृष्ट-

वदात्मपरमाणुसंयोगोऽसमवायिकारणम् । अदृष्टः निमित्तकारणम् । एवं कर्मोत्पत्तौ पवनपरमाणूनां परस्परसंयोगा जायन्ते । तत्संयोगेभ्यश्च द्व्यणुकान्युत्पद्यन्ते । तदनु त्र्यणुकानीत्येवं क्रमेण महान् वायुः समुत्पद्यमानो नभसि दोधूयमानः (क्वचिदप्रतिहतत्वाद् वेगातिशययुक्तः) तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यः द्व्यणुकादिक्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानः (प्रतिरोधकाभावात्) सर्वत्र प्लवमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव जलधौ पार्थिवेभ्यः परमाणुभ्यो महापृथिवी संहता (स्थिरस्वभावा) (कठिणस्वभावा) अवतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिक्रमणोत्पन्नो महान् तेजोराशिः केनचिदनभिभूतत्वाद् देदीप्यमानस्तिष्ठति । यद्यपि पयःपावकयोः स्वाभाविको विरोधः तथाऽपि अदृष्टवशेनाधाराधेयभावो नानुपपन्नः ।

एवं चतुर्षु महाभूतेषु समुत्पन्नेषु सत्सु, महेश्वरस्य सङ्कल्पमात्रात् पार्थिवपरमाणुसहितेभ्यः तैजसपरमाणुभ्यः महदण्डमारभ्यते । महदण्डारम्भे पार्थिवा अवयवा उपष्टम्भकाः । तस्माद् अण्डमिदं वह्निपुञ्जप्रायं नाभूदित्यवगन्तव्यम् । अण्डेऽस्मिन् सर्वलोकपितामहं चतुर्मुखं ब्रह्माणं सकलभुवनैः साकमुत्पाद्य प्रजासृष्टौ विनियुङ्क्ते 'त्वमिदं कुरु' इति । स च महेश्वरेण युक्तः चतुर्मुखः ब्रह्मा अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नो ज्ञानातिशयात् प्राणिनां धर्माधर्मौ यथावज्जानाति । वैराग्यात् पक्षपातेन न प्रवर्तते । ऐश्वर्यात् कर्मफलं जीवान् भोजयति । प्राणिनां कर्मविपाकं - एतावदस्य कर्मफलं भवतीति ज्ञात्वा, कर्मानुरूपज्ञानभोगायुर्युक्तात् दक्षप्रजापतिप्रभृतिपुत्रान् मानसान् (मनोजातान्) मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो

वर्णान् - मुखाद् ब्राह्मणान्, बाहुभ्यां क्षत्रियान्, ऊरुभ्यां वैश्यान् पद्भ्यां शूद्रान् अन्यानि उच्चावचानि क्षुद्रक्षुद्रतराणि च भूतानि सृजति । तदनु तत्तज्जीवकर्मानुरूपैः धर्मज्ञानवैराग्यैश्वर्यैः जीवान् संयोजयति । यस्य यथाविधं कर्म तत्तदनुरूपेण ज्ञानादिना सम्यग् योजयति । मात्रयाऽप्यन्यथा न करोति ।

## ९. इतरदर्शनेषु वैशेषिकदर्शनस्य प्रभावः

**'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्'** इत्याभाणकमेवाऽवेदयति इतरदर्शनानामुपरि वैशेषिकदर्शनस्य प्रभावोऽतीवास्तीति । न हि वैशेषिकशास्त्रमनधीयानः इतरशास्त्राण्य-नायासेनाधिगन्तुं प्रभवति । तथाऽपि सर्वशास्त्रोपकारकस्य वैशेषिकदर्शनस्य प्रभावो इतरदर्शनेषु वक्तव्यश्चेत् चतुर्धा वक्तव्यो भवति । तद्दर्शनप्रतिपाद्यविषयाभ्युपगमेन २. तद्दर्शनशैल्याः अनुकरणेन, ३. तद्दर्शनखण्डनेन ४. इतर-दर्शनोपकारकत्वेन । तत्रान्तिमः प्रकारः सर्वैः स्वीकृतः वैशेषिकदर्शनस्य सर्वशास्त्रोपकारकत्वेन प्रसिद्धत्वात् । तृतीयः प्रकारोऽपि अन्यान्यदर्शनेषु दृश्यते । तथा हि- वैशेषिकसम्मतः परमाणुकारणवादः ब्रह्मसूत्रकृता बादरायणेन निराकृतः । तथा समवायादिपदार्थाश्च प्रत्याख्याताः । एवं 'खण्डनखण्खनखाद्यम्, तत्वप्रदीपिका इत्याद्यद्वैतवेदान्तग्रन्थेषु, 'न्याय-परिशुद्धिः न्यायसिद्धाञ्जनम्' इत्यादिविशिष्टाद्वैतवेदान्तग्रन्थेषु 'न्याय-सुधा तर्कताण्डवम् द्वैतद्युमणिः इत्यादिद्वैतवेदान्तग्रन्थेषु च वैशेषिक-सम्मतप्रमाणप्रमेयतल्लक्षणानां बहुधा खण्डनं दृश्यते ।

भ्रमविषये भाट्टैः वैशेषिकरीतिरेवाऽऽदृतेति शास्त्रदीपिकायाः सिद्धान्त-चन्द्रिकाव्याख्यातोऽवगम्यते । नव्यमीमांसकाः खण्डदेवादयोऽपि स्वग्रन्थेषु नव्यन्यायादृतपरिष्कारशैलीमादृतवन्त इत्यनेनैव ज्ञायते

मीमांसादर्शने न्यायवैशेषिकदर्शनयोः प्रभावः । एवं वैशेषिकैः नैयायिकैरादृतः परमाणुकारणतावादः बौद्धैः स्वीकृत इति बौद्ध-दर्शनस्योपरि वैशेषिकदर्शनस्य प्रभाव ऊहितुं शक्यते । दिङ्नागादि-बौद्धाः स्वसिद्धान्तमण्डने परसिद्धान्तखण्डने च वैशेषिक-नैयायिकादृतपरिष्कारशैलीमेवानुसस्रुः । एवं जगन्नाथभट्टादयो आलङ्कारिका अपि न्यायवैशेषिकादृतपरिष्कारशैलीमवलम्ब्यैव स्वस्व-सिद्धान्तं स्थापयामासुः इत्यनेन सर्वेषां दर्शनानामुपरि वैशेषिक-न्यायदर्शयोः प्रभावः ऊहितुं शक्यते । बाह्यदृष्ट्यैवेदम् । वस्तुतस्तु 'अनादिकालतो वृत्ताः समया हि प्रवाहतः' (अनुव्याख्यानम्)

इत्युक्तरीत्या समेषां दर्शनानां प्रवाहतः नित्यत्वात् कस्यापि दर्शनस्योपरि कस्यापि दर्शनस्य प्रभावः नास्तीत्येव तत्वम् ।

**पादटिप्पण्यः**

१. अत्र केचन - साङ्ख्ययोगौ, नैयायिकवैशेषिकौ, भाट्टप्राभाकरौ चेति षड्-दर्शनानीत्याहुः । अन्ये तु भाट्टप्राभाकरौ एकीकृत्य पूर्वमीमांसा उत्तर-मीमांसाकम्मन्याः मायावादिमुखाश्चेति वा । अपरे साङ्ख्ययोगौ, जैनबौद्धौ, नैयायिकवैशेषिकौ चेति षड्दर्शनानीत्याहुः । एके- भाट्टप्राभाकरौ, वैशेषिकनैयायिकौ, बौद्धचार्वाकौ चेति षड्दर्शनान्याहुः । (मध्वविजयः - सर्ग -९, श्लो.२५ - पृ.सं. ३४४- (ब.गो.))

२. केचिद् योगदर्शनस्थाने व्याकरणदर्शनस्य परिगणनं कृत्वा श्लोकमिम-मन्यथाऽपि पठन्ति-

**'जैमिनेः पाणिनेश्चैव व्यासस्य कपिलस्य च ।**
**कणादस्याक्षपादस्य दर्शनानि षडेव हि ॥'** इति ।

३. अत्र काणादशब्देन न्यायदर्शनमपि ग्राह्यम् । काणदन्यायदर्शनयोः समान-दर्शनत्वेन प्रसिद्धत्वात् ।

४. पाद्मपुराण- उ.खण्ड. अ- २०७

५. अत्र केचिदेवं वदन्ति । 'सोऽयं मुनिः महाभारते भीष्मस्तवराजे उलूकनाम्न उल्लेखात् महाभारतादपि पूर्वकालीनः । किञ्च 'न वयं षट्पदार्थवादिनो वैशेषिकादिवत्' इति साङ्ख्यसूत्रादप्यतिप्राचीनः । एवं 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां' इति ब्रह्मसूत्रपर्यालोचनया वेदान्तदर्शनादप्येतद्दर्शनं (वैशेषिकदर्शनं) प्राचीनम् । 'शब्दानामुत्पत्तिविनाशवत्त्वं' इति काणादन्यायदर्शनसिद्धान्तः । स च 'कर्मैके तत्र दर्शनात्' इत्यादिसूत्रैरुद्धृत्य महता यत्नेन जैमिनिमहर्षिणा खण्डितः । तस्मान्मीमांसादर्शनादपि अस्य वैशेषिकदर्शनस्य प्राचीनत्वम् । वैशेषिकसूत्राणां भाष्यं रावणेन व्यरचीति रत्नप्रभादौ दर्शितमिति लङ्कापुरीस्थ-रावणादपि अस्य प्राचीनत्वम् । किञ्च वैशेषिकदर्शनेऽनुमानस्य सङ्क्षेपतो वर्णनात् हेत्वाभासस्य त्रैविध्यकथनाच्चेति 'पूर्वं कणादेन पूर्वोक्तविषयस्य रीतिः समुद्भाविता । ततोऽनन्तरमक्षपादेन विस्तारिता सम्यङ्निबद्धा च । समानतन्त्रे वैशेषिके प्रतितन्त्रसिद्धान्तसिद्धं नैयायिकस्य मनस इन्द्रियत्वम्' इति वैशेषिकदर्शनस्य न्यायदर्शनादपि प्राचीनत्वमवगम्यत इति ।

तदियं केषाञ्चिद् वादसरणी कोविदानां न मुदमावहतीति उपेक्षणीयैव । वयं तु सकलसूत्रशास्त्रतात्पर्याकलनादित्थं कथयामः । महाभारतप्रतिपादितः उलूकमहर्षिः अस्माद् उलूकनाम्नः कणादादन्य एव । 'महद्दीर्घवद्वा' इत्यादि ब्रह्मसूत्राणां तु अनादिसिद्धवैशेषिकमतखण्डनपरत्वमेव । नत्ववर्वाचीनकणादमहर्षिप्रणीतसूत्रार्थखण्डनपरत्वम् । एवमेव जैमिनिमीमांसादर्शनस्यापि तात्पर्यमुन्नेयम् । रावणस्तु कश्चनार्वाचीनः द्विजोत्तम एव । न तु श्रीरामशत्रुः रामायणप्रतिपाद्यः पौलस्त्य इति । न केवलं हेत्वाभासत्रैविध्यरूपसङ्क्षेपकथनेनैव न्यायदर्शनात् प्राचीनत्वं कणाददर्शनस्य वक्तुं युक्तम् । वैपरीत्येनापि वक्तुं शक्यत्वात् । तथा हि- न्यायदर्शने हेत्वाभासानां पञ्चत्वं प्रथमं निरूपितम् । पश्चात् कणादेन पञ्चत्वं त्यक्त्वा हेत्वाभासस्य युक्त्या सङ्क्षेपतो वा त्रैविध्यं प्रत्यपादि इत्यपि वक्तुं शक्यत्वात् । तस्मादित्थं

वक्तव्यम्- ब्रह्मसूत्रं, जैमिनिमीमांसासूत्रं, न्यायसूत्रम्, वैशेषिकसूत्रम्, साङ्ख्यसूत्रम्, योगसूत्रमित्येवं क्रमेण सूत्रोत्पत्तिर्जाता इति । **(न्यायकोशः-** पृ.सं.२,३)

६. **स्वसिद्धान्तरक्षकत्वेन परसिद्धान्तभञ्जकत्वेनेयं न्यायकन्दलीति प्रथिता इति ग्रन्थकारोऽन्त्ये**

**'अक्षीणनिजपक्षेषु ख्यापयन्ती गुणानसौ ।**

**परप्रसिद्धसिद्धान्तान् दलति न्यायकन्दली'** ॥ इति स्वयमेव वक्ष्यति ।

७. वैशेषिकसूत्रोपस्कार - श्लो.२

८. वै.सू.१.१.२

९. संसार्यवस्थायां कालान्तरीयसकलात्मविशेषगुणध्वंसमादाय मोक्षव्यवहारवारणाय एककालीनेति । संसारिणोऽपि कतिपयात्मविशेषगुणध्वंससत्वादतिप्रसङ्गवारणाय सकलेति । मुक्तात्मनि संयोगादिसामान्यगुणानां विद्यमानत्वात् तत्र निःश्रेयसव्यवहारो न स्यादतो विशेषपदम् । चरमादृष्टध्वंसक्षणेऽपि विनश्यदवस्थचरमदुःखस्य सत्वात् तत्र मुक्तिव्यवहारनिरासाय सकलादृष्टध्वंसमुपेक्ष्य विशेषगुणध्वंसपर्यन्तानुधावनमिति ज्ञेयम् ।

१०. वै.सू. १.१.४

११. शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभावत्वेनैव व्याख्यातम् । यथा व्याप्तिपक्षधर्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शब्दमपि' इति सूत्रार्थः ।

१२. वै.सू. ७.२.१०

१३. वै.सू. १.१.६

१४. वै.सू.१.१.७

१५.विशेषयन्ति व्यावर्तयन्ति स्वाश्रयमाश्रयान्तरादिति ते विशेषा इत्युच्यन्ते ।

## परामृष्टा ग्रन्थाः

१. वैशेषिकसूत्रवृत्तिः - देशिकतिरुमलताताचार्यः - गङ्गानाथ झा केन्द्रियसंस्कृतविद्यापीठम् - प्रयाग, १९७८.
२. प्रशस्तपादभाष्यम्- प्रशस्तपादः - (न्यायकन्दलीव्याख्याया सङ्कलितम्- श्रीधरभट्टः)- सम्पूर्णानन्दसंस्कृत विश्वविद्यालयः, १९७७.
३. वैशेषिकसूत्रोपस्कारः - शङ्करमिश्रः
४. व्योमवती - व्योमशिवाचार्यः - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९८३
५. तर्कसङ्ग्रहः (कन्नड) - डा.ए.वि.नागसम्पिगे, कर्नाटकमुक्तविश्वविद्यालयः, मानसगङ्गोत्री, मैसूरु.
६. सर्वदर्शनसङ्ग्रहः - सायणमाधवः -
७. भारतीयदर्शन (कन्नड)
८. न्यायकोशः - भीमाचार्यः - भण्डारकर् प्राच्यसंशोधनालयः, १९९६.
९. तर्कसङ्ग्रह दीपिकाप्रकाशिका (बालप्रियाहिता)- श्रीमहालक्ष्मीमातृभूतेश्वर ट्रस्ट्, चेन्नै, २०००

*****

# मीमांसाशास्त्रपरिचयः

-प्रा. के. इ. देवनाथन्

वाक्यशास्त्रमिति प्रसिद्धे मीमांसाशास्त्रेऽभ्युपगतानि प्रमाणानि प्रमेयानि च सङ्क्षेपेण निरूप्यन्ते । अस्मिन् निबन्धे द्वादशलक्षण्याः मीमांसायाः सारः सरलतया प्रतिपिपादयिषितः ।

**प्रमाणलक्षणम्**

अनधिगताबाधितार्थविषयकं ज्ञानं प्रमा । स्मृतिः अनधिगतदलेन व्यावर्तिता । भ्रमव्यावृत्यर्थं अबाधितेति । 'अयं घटः, अयं घटः' इति ज्ञानधारायां द्वितीयादिज्ञानानां प्रमात्वमस्त्येव[१] । तत्र पूर्वपूर्वज्ञानाविषयस्य क्षणविशेषस्य घटविशेषणत्वेन भानात् । 'अस्मिन् क्षणे घटो मयोपलब्धः' इत्यनुभवात् । नीरूपस्यापि कालस्य प्रत्यक्षत्वमिष्यत एव । एतादृशप्रमायाः करणम्- प्रमाणम् ।

षट् प्रमाणानि - प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्याख्यानि अङ्गीक्रियन्ते । इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षम् । तत् द्विविधम्- निर्विकल्पकं सविकल्पकं चेति । जातिगुणक्रियादिविशिष्टत्वानवगाहिज्ञानं निर्विकल्पकम्, तदवगाहिज्ञानं सविकल्पकं चेति । तस्योदाहरणम्- 'अयं घटः', 'अयं नीलः', 'अयं चलति' इत्यादि ज्ञानम् । निर्विकल्पकं केवलेन्द्रियसन्निकर्षजन्यम्, सविकल्पकं तु विशेषणज्ञानसहकृतेन्द्रियसम्बन्धजन्यम् इति विवेकः । मनसोऽपि इन्द्रियत्वमस्ति । तद् भवति आन्तरमिन्द्रियम् । समवाय इति सम्बन्धः पृथक् न स्वीक्रियते । अयुतसिद्धयोः पदार्थयोः भेदाभेदौ स्वीक्रियेते । ततः तादात्म्यमेव सम्बन्धस्तयोः । संयोगः, संयुक्ततादात्म्यम्,

संयुक्ततादात्म्यवत् तादात्म्यम्, संयुक्ततादात्म्यवत्तादात्म्यवत्तादात्म्यम् इति चत्त्वारः सन्निकर्षाः । गुणत्वगतसत्ताप्रत्यक्षे संयुक्ततादात्म्यवत्तादात्म्यवद्गुणत्वतादात्म्यं सन्निकर्ष इति विशेषः । नहि सत्ता द्रव्यगुणकर्मस्वेव वर्तत इति परिभाषा प्रामाणिकी । 'दिशः श्रोत्रम्' इति श्रुतिबलात् श्रोत्रदिगात्मकमेवेति मीमांसकाः । शब्दो विभुः । स च संयोगसन्निकर्षेण गृह्यते । विभुद्वयसंयोगो नित्यः स्वीक्रियते ।

व्याप्तिज्ञानजन्यं ज्ञानमनुमितिः[२] । व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसम्बन्धः । व्याप्तिज्ञानं पक्षधर्मताज्ञानसहकारेणानुमितिं जनयति । उदाहरणपर्यन्तमुदाहरणादिकं वा वाक्यत्रयम् अवयवाः । अवयवानां साधनवाक्यमिति नाम । अनुमाने प्रतिज्ञादोषो हेतुदोषश्च दोषौ भवतः । प्रतिज्ञाविरोधादयः प्रतिज्ञादोषाः असिद्धिरनैकान्तिकत्वं बाधकत्वमिति त्रयो हेतुदोषाः । परैः विरुद्धतयोच्यमानो हेतुरेतैः बाधक इत्युच्यते । शब्दो नित्यः कृतकत्वादिति उदाहरणम् । कृतकत्वं नित्यत्वाभावव्याप्ततयोदाहृतम् ।

शाब्दप्रमाकरणं शब्दप्रमाणम् । शब्दप्रमायां पदार्थाः करणम् । तात्पर्यविषयाबाधितार्थसंसर्गानुभवः शाब्दप्रमा । पदार्थानां परस्परमपेक्षा आकाङ्क्षा तात्पर्यविषयसंसर्गाबाधः योग्यता । एवमासत्तिश्च- शाब्दप्रमायां सहकारिकारणानि । क्रियाकारकयोः परस्परमपेक्षा वर्तते । यत्रापेक्षा नास्ति तत्रापि शाब्दबोधो जायते । अतः पदार्थानां नापेक्षामात्रं आकाङ्क्षा, किन्तु अपेक्षां प्रति योग्यता आकाङ्क्षा इति वक्तव्यम् । अपेक्षाविरहदशायामपि अपेक्षाविषयतावच्छेदकक्रियात्वकारकत्वादिधर्मवत्त्वं पदार्थे वर्तत इति आकाङ्क्षायाः सत्त्वम् इति । 'शक्तिः, लक्षणा, गौणी' इति वृत्तित्रयमस्मिन् सिद्धान्ते स्वीकृतम् ।

लक्षणा द्विविधा जहल्लक्षणा अजहल्लक्षणा चेति । यत्र वाच्यार्थस्य न भानम् । सा जहती लक्षणा । या 'गङ्गायां घोषः' इत्यत्र केवलतीरे लक्षणा सा जहल्लक्षणा । गङ्गातीरे लक्षणायां तु अजहल्लक्षणा । लक्ष्यमाणगुणसम्बन्धरूपा गौणी । 'सिंहो माणवकः' इत्यत्र सिंहपदलक्ष्यं सिंहगतशौर्यं, तत्सम्बन्धात् माणवकस्य बोधः । 'खपुष्पं भवत्सिद्धान्तः' इत्यत्र खपुष्पगताप्रामाणिकत्वसदृशाप्रामाणिकत्ववत्त्वं सिद्धान्ते भवतीति खपुष्पशब्दो गौणः । खपुष्पस्यासतोऽपि शब्दजन्यज्ञान-विषयत्वं स्वीक्रियते, अतो न दोषः ।

वेदः मन्त्रब्राह्मणभेदेन द्विविधः । ब्राह्मणं द्विविधम्- विध्यर्थवाद-भेदात् । प्रवर्तनानिवर्तनान्यतरबोधकं वाक्यं विधिः । प्रवर्तना प्रवृत्त्यनूकूलव्यापारः स च लिङ्वाच्यः । लोके 'अयमत्र प्रवर्तताम्' इत्याकारकपुरुषाशयविशेषः वेदे तु पुरुषाभावात् लिङादिनिष्ठः निरुक्त-पुरुषाभिप्रायसमानाकारोऽलौकिको धर्मः । वेदोऽपौरुषेयः । अतः स्वतःप्रमाणम् । शब्दोऽपि नित्यः ।

विधिश्चतुर्विधः-उत्पत्ति-विनियोग-प्रयोगाधिकारविधिभेदात् । उत्पत्ति-विधिः कर्मस्वरूपबोधकः । विधेयत्वमज्ञातज्ञाप्यत्वम् । कर्मस्वरूपनिष्ठ-तादृशविधेयताख्यविषयताशालिबोधतात्पर्यको विधिः उत्पत्तिविधिः । 'अग्निहोत्रं जुहोति' इत्युदाहरणम् । अनेन वाक्येन अज्ञातं कर्मस्वरूपं बोध्यते । इष्टसाधनताबोधको विधिः विनियोगविधिः । 'अग्निष्टोमे प्रवृणोति' इति वाक्यम् । अनेन प्रवर्ग्यस्याग्निष्टोमोपकाररूपेष्टसाधनता ज्ञाता ज्ञाप्यते । कृतिसाध्यत्वबोधको विधिः - प्रयोगविधिः । 'अस्मिन् काले अस्मिन् देशे साङ्गप्रधानं कुर्यात्' इति प्रयोगविधिस्वरूपम् । अधिकारबोधको विधिः अधिकारविधिः, यथा - 'ज्योतिष्टोमेन

स्वर्गकामो यजेत' इति वाक्यम् । अधिकारः फलस्वाम्यम् । उपमानं सादृश्यप्रमितिं, अर्थापत्तिः उपपादकं, तथा अनुपलब्धिः अभावप्रमितिं च जनयति । एतद्विस्तरः ग्रन्थेषु द्रष्टव्यः ।

**प्रथमद्वितीयपादः**

अस्मिन् पादे अर्थवादानां मन्त्राणां च प्रामाण्यप्रकारो विशोध्यते । अध्ययनविधिः- 'स्वाध्यायोऽध्येतव्यः' इति । कृत्स्नस्य वेदस्य प्रयोजनवदर्थपरत्वं प्रतिपादयति 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादः यथाश्रुते प्रयोजनवदर्थं न प्रतिपादयति । कथं तेषां प्रामाण्यम् ? अंशत्रयविशिष्टभावनाबोधकतयैव वेदवाक्यानां प्रामाण्यं वक्तव्यम् । एतानि वाक्यानि तादृशभावनाप्रतिपादकानि नेति कथं तेषां प्रयोजनवदर्थपरत्वम् ? कथं वा तेषां धर्माधर्मयोः प्रामाण्यम् ? इति पूर्वपक्षे विधिवाक्येन, एकवाक्यतामापन्नानि तानि वाक्यानि धर्माधर्मयोः प्रमाणानीति सिद्धान्तः । अत्र विधिशब्देन निषेधवाक्यमपि स्वीकर्तव्यम् । प्रयोजनवदर्थः प्रकृते प्राशस्त्यमप्राशस्त्यं च । ते च विधि-निषेधापेक्षिते । मन्त्राणामपि धर्माधर्मयोः प्रामाण्यमेवं भवति । प्रयोगसमवेतार्थस्मरणं दृष्टं प्रयोजनं मन्त्राणाम् । यद्यपि तदर्थस्मरणं ध्यानाद्युपायान्तरेणापि सम्भवति, तथापि मन्त्राम्नानबलेन मन्त्रैरेव स्मृत्वा कर्मानुष्ठाने फलं सिद्ध्यति, नान्यथा इति नियमः मन्त्राणां यथार्थज्ञानजनकत्वमर्थस्मरणजनकत्वात् सम्भवति । न च तथापि कथं धर्मप्रामाण्यनिर्वाह इति वाच्यम् । पदार्थानां शाब्दबोधकरणत्वमिति सिद्धान्ते शाब्दबोधजनकोपास्थिति-विषयपदार्थानामपि करणत्वस्यानपायात् । पदार्था हि शाब्दबोधजनकज्ञानविषयत्वात् करणमिति मीमांसक-सम्प्रदायः, तथैव शाब्दबोधजनकोपस्थितिविषयस्य

मन्त्रस्यापि शाब्दकरणत्वमस्त्येव । 'उरुप्रथस्वेति पुरोडाशं प्रथयति' इति वाक्यजन्यशाब्दबोधे उरुप्रथस्वेति मन्त्रः पदार्थविधया करणम् ।

तृतीयपादे स्मृत्याचारयोः धर्मप्रामाण्यविचारः कृतः । स्मृतेः श्रुतिमूलकतया प्रामाण्यम् । श्रुतिविरोधात्तु 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः न प्रमाणम् । एवं वसन्तोत्सवाद्याचारा अपि स्मृतिमूलकतया प्रमाणतां भजन्ति ।

चतुर्थपादे नामधेय-वाक्यशेष-सामर्थ्यानां धर्मैः प्रामाण्यं निरूपितम् । 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भित्पदं कर्मनामधेयम्, मत्वर्थ-लक्षणाभयात् । उद्भित्पदस्य गुणपरत्वे उद्भिद्वता यागेन पशून् भावयेत् इति वाक्यार्थस्य वर्णनं कार्यम्, एवं सति उद्भिच्छब्दस्य मत्वर्थलक्षणा स्यात् ।

'चित्रया यजेत पशुकामः' इत्यत्र चित्राशब्देन अग्नीषोमीय-यागानुवादेन चित्रत्वस्त्रीत्वरूपगुणद्वयविधाने चित्रत्वेन यागं भावयेत्, स्त्रीत्वेन यागं भावयेद् इति वाक्यभेदः स्यात् । अतः चित्राशब्दो यागनामधेयम् ।

'अग्निहोत्रं जुहोति' इत्यत्र अग्निहोत्रशब्दः कर्मनामधेयम् । नहि अग्निहोत्रशब्दः अग्निदेवतारूपगुणप्रापक इति वक्तुं शक्यते । तत्प्रापकस्य 'अग्निर्ज्योतिः ज्योतिः' इति मन्त्रवर्णात्मकस्य शास्त्रस्य सत्त्वात् । अतः अग्निहोत्रशब्दः होमनामधेयम् ।

'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनशब्दः यागविशेषस्य नामधेयम् । 'यथा वै श्येनो निपत्याऽमिषमादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽदत्ते' इति श्येनसादृश्यव्यपदेशस्य प्रकृतवाक्ये श्येनशब्दस्य

श्येनपक्षिरूपगुणप्रापकत्वेऽनुपपत्तेः । न हि स्वस्मिन् स्वसादृश्यव्यपदेशो युज्यते, सादृश्यस्य भेदघटितत्वात् । एवं चतुर्भिः प्रकारैः नामधेयत्वम् । एवं वाक्यशेषोऽपि धर्मे प्रमाणम् ।

तथाहि- शर्करा अक्ता उपदध्यात्, इत्यत्रोक्तस्याञ्जनस्य साधनं 'तेजो वै घृतम्' इतिवाक्यशेषबलाद् घृतमित्येव सिद्ध्यति । विधि-वाक्यस्य स्तुतिवाक्यस्य च एकार्थबोधकत्वावश्यम्भावात् ।

एवं सामर्थ्यमपि धर्मे प्रमाणम् । यथा- स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति' इति सामान्यतोऽवदानस्योक्तत्वेऽपि सामर्थ्यात् द्रवद्रव्यावदाने एव स्रुवस्य, मांसाद्यवदाने स्वधितेः, पुरोडाशाद्यवदाने हस्तस्य विधिः सिद्ध्यति ।

अष्टौ धर्मे प्रमाणानि एवं सङ्क्षेपतो निरूपितानि ।

**द्वितीयाध्यायः ।**

द्वितीयाध्याये कर्मभेदो निरूप्यते । कर्मभेदो नाम अंशत्रयविशिष्ट-भावनाभेदः । स च शब्दान्तराभ्याससङ्ख्यासञ्ज्ञागुणप्रकरणान्तररूपैः षड्भिः प्रमाणैः गम्यते । भावनाभेदोपपादकतया धात्वर्थभेदनिरूपणमत्र भवति । भावनाभेदफलमपूर्वभेद इति अपूर्वभेदोऽपि तत्र तत्र विचार्यते । तत्र प्रथमपादे कर्मभेदविचारार्थमुपोद्घाततया किञ्चिद्विचार्यते । द्वितीयपादे शब्दान्तराभ्याससङ्ख्यासञ्ज्ञागुणैः प्रमाणैः कर्मभेदो निरूप्यते ।

तृतीयपादे प्रकरणान्तरात् कर्मभेदो निरूप्यते । चतुर्थपादे विनियोगभेदो निरूप्यते ।

**अपूर्वप्रभेदाः**

आशुतरविनाशिनो यागस्य कालान्तरभाविफलजनकत्वं फलपर्यन्त-स्थायिना केनचिद्व्यापारेण विना न सम्भवति- इति अपूर्वं कल्प्यते । न च यागादिध्वंस एव द्वारमास्थियताम् इति वाच्यम्, 'धर्मः क्षरति कीर्तनात्' इति धर्मस्य कीर्तनानाश्यत्वोक्तेः ध्वंसस्य नाशाप्रतियोगिनः द्वारत्वासम्भवात् । अपूर्वं= उत्पत्त्यपूर्वम् । अङ्गापूर्वं, महापूर्वं, समुदायापूर्वम् इति अनेकप्रकारम् । प्रधानव्यवहितोत्तरजातमपूर्वम् उत्पत्त्यपूर्वम् । अङ्गापूर्वोपकृतोत्पत्त्यपूर्वेण जनितं फलपर्यन्तस्थायि अपूर्वं महापूर्वं परमापूर्वं वा भवति । अङ्गानि द्विविधानि-सन्निपत्योपकारकाणि, आरादुपकारकाणीति । अङ्गिस्वरूपनिष्पादकं सन्निपत्योपकारकम् । यथा दर्शपूर्णमासयोः प्रोक्षणम् । उत्पत्त्यपूर्वनिष्ठ-तदव्यवहितकार्यानुकूलशक्तिसम्पादकमारादुपकारकम् यथा- दर्शपूर्ण-मासयोः प्रयाजादिदर्शपूर्णमासस्थले समुदायापूर्वद्वयं स्वीक्रियते । दर्शपूर्णमासस्थले षड्यागाः प्रधानानि । ते च आग्नेयद्वयं, ऐन्द्रं दधि, ऐन्द्रं पयः, उपांशु याजः, अग्नीषोमीयपुरोडाशयाग इति । न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति वाक्ये द्विवचनं श्रूयते, तच्च दर्शपूर्णमासकालयोगि आग्नेयद्वयमेव फलसम्बन्धित्वेन बोधयति, अन्येषां यागानां फलवत् सन्निधौ अफलं तदङ्गमिति न्यायेन तदङ्गत्वमेवेति वाच्यम्, 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वान् अमावास्यां यजते' इति वाक्यद्वयेन तत्तत्कालयोगिनां त्रयाणामेवानुवादात् समुदायद्वयस्य सिद्धेः, तयोरेव समुदाययोः फल-सम्बन्धवाक्ये द्विवचनेनानुवादात् । एवञ्च विद्वद्वाक्यद्वयं फलसम्बन्ध-वाक्ये द्विवचनस्य बहुत्वलक्षणातात्पर्यग्राहकत्वम् । दर्शपूर्णमासवाक्ये

द्विवचनस्य द्वित्वं शक्यार्थः,स्वाश्रयसमुदायघटकसमुदायिभूत-आग्रे-यादिवृत्तित्वं बहुत्वे सम्बन्धः । एतादृशशक्यसम्बन्धरूपलक्षणया दर्श-पूर्णमासवाक्ये षण्णामेव फलसम्बन्धो लभ्यते इति षडपि प्रधानानि ।

प्रधानाव्यवहितजन्यानि षडुत्पत्त्यपूर्वाणि भवन्ति । 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयेन षडपूर्वेषु त्रयाणां त्रयाणां साहित्यम् एककालावच्छिन्नोत्पत्तिकत्वरूपं प्रतीयते । साहित्यं च एककार्यनिरूपितत्वरूपमपि भवति - इति प्रतित्रिकं समुदायापूर्वमेकं कल्प्यते । तेन समुदायापूर्वे द्वयेन परमापूर्वं जायत इति दर्शपूर्णमासस्थले नवापूर्वाणि ।

कर्म द्विविधम् । गुणकर्म, प्रधानकर्म चेति । आत्मगतादृष्टजनकं कर्म प्रधानकर्म, यथा प्रयाजादिकं स्तोत्रशस्त्रादिकं च संस्कारजनकं कर्म गुणकर्म । व्रीहीन् प्रोक्षतीत्युदाहरणम् - प्रोक्षणेन व्रीहिषु अदृष्टसंस्कारः जायते । गुणकर्म द्विविधम् - उपयोक्ष्यमाणसंस्कारकम्, उपयुक्त-संस्कारकं चेति । उपयोक्ष्यमाणसंस्कारकमपि द्विविधम् - विनियुक्त-संस्कारकं, विनियोक्ष्यमाणसंस्कारकं चेति । विनियुक्तसंस्कारकं - प्रोक्षणावघातादि । विनियोक्ष्यमाणसंस्कारकं वैश्वदेवयागे विनियोक्ष्य-माणस्य पयसः संस्कारकं दध्यानयनम् । एवमुपयोक्ष्यमाण-संस्कारकमुक्तम् । उपयुक्तसंस्कारकं कर्म प्रतिपत्तिकर्म । उपयुक्तस्य आकीर्णकरस्य विहितदेशे प्रक्षेपः प्रतिपत्तिः । प्रतिपत्तेः फलमाकीर्णकरतानिवृत्तिरेव । 'कृष्णविषाणया कण्डूयते' इति यजमानस्य कण्डूयने कृष्णविषाणा विहिता । उपयुक्तायाः कृष्णविषाणायाः 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति वाक्येन चात्वाले प्रासनं यद्विहितं, तत् प्रतिपत्तिकर्म । पशौ

शकृन्निरसनादिकं प्रधानपूर्वकालप्रतिपत्तिः । शकृल्लोहितादिकं हि वपोद्धारणोपयुक्तपशुसम्बन्धित्वेनोपयुक्तम् । प्रधानोत्तरकालप्रतिपत्तिः-इडाभक्षणादिः । प्रधानसमकाला प्रतिपत्तिः चतुरवदानहोमादिः । वषट्कारानन्तरं होमो विहितः, स चाध्वर्युकर्तृकः , याज्यस्मारितदेवता देवतोद्देश्यकयागसमकालो भवति । चतुरवदानं नाम 'सकृदुपस्तृणाति' 'द्विर्हविषोऽवद्यति' 'सकृदभिधारयति' इति विहितं उपस्तरणादिकम् ।

द्वितीयद्वितीयपादे शब्दान्तरेण अभ्यासेन सङ्ख्यातः सञ्ज्ञया गुणेन च कर्मभेदो निरूप्यते । शब्दान्तरं नाम अपर्यायधातुः । विभिन्न-धात्वर्थकत्वम् इति नव्याः । ज्योतिष्टोमप्रकरणे 'सोमेन यजेत' 'हिरण्यमात्रेयाय ददाति' 'दाक्षिणानि जुहोति' इति श्रूयते । अत्र धात्वर्थभेदात् भावनाभेदः । विजातीययागत्वादेः कार्यतावच्छेदकत्वेन तदवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकभावनात्वान्यपि विजाती-यान्येवेति शब्दान्तराद् भावनाभेदः । अभ्यासो नाम अनन्यपरविधिः पुनः श्रवणम् । यथा 'समिधो यजति' 'तनूनपातं यजति' इत्यादिवाक्यैः भिन्नाभिन्नयागाः विधीयन्ते । 'दध्ना जुहोति' इति वाक्यं न कर्मान्तरविधायकम्, तद्विधेः पुनः श्रवणमन्यपरम् - गुणविधानपरम् इति यावत् । 'तनूनपातं यजति' इत्यादौ विधिपुनःश्रवणमनन्यपरम् । विहितस्य विधानायोगात् । एवं च यागभेदे सति भावनाभेदः ।

'तिस्र आहुतीर्जुहोति' इत्यत्र सङ्ख्यया कर्मभेदः । त्रित्वसङ्ख्या हि धात्वर्थगता धात्वर्थानां परस्परं भेदं बोधयति । एकत्वान्यसङ्ख्यायाः स्वाश्रयप्रतियोगिकभेदसामानाधिकरण्यनियमात् ।

एवं नामधेयेन कर्तव्यस्योपयोगस्य सङ्कल्पादौ निर्देशरूपस्य एकेनैव नामधेयेन सिद्धेः एकस्मिन् कर्माणि नामधेयान्तरस्य व्यर्थत्वात्

नामधेयान्तरं कर्मान्तरत्वसाधकम् इति 'अथैष ज्योतिः, अथैष विष्वग्ज्योतिः, अथैष सर्वज्योतिः, एतेन सर्वदक्षिणेन यजेत' इत्यत्र कर्मभेदः ।

गुणात्कर्मभेदस्योदाहरणम्- सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र वैश्वदेवयागात् वाजिनयागो भिन्नः । वाजिनद्रव्यस्य उत्पन्न-शिष्टत्वाद् वैश्वदेवयागे निवेशो हि न सम्भवति । न च परस्परापेक्षा-विषयतावच्छेदकधर्मवत्त्वमाकाङ्क्षा, स च धर्मः यागत्वप्रदेयद्रव्यत्वादि-रूपः, उत्पन्नशिष्टद्रव्येऽपि समस्तीति कथं वाजिनस्योत्पन्नशिष्टद्रव्यस्य वैश्वदेवयागेनान्वय इति वाच्यम्, परस्परविषयाकाङ्क्षोत्थापकतावच्छेदक-धर्मवत्त्वस्यैवाकाङ्क्षारूपत्वात् । यस्य यागस्य द्रव्यं नावगतम् स यागः द्रव्याकाङ्क्षामुत्थापयति, अनवगतद्रव्यकयागत्वमेव द्रव्याकाङ्क्षोत्थापक-तावच्छेदकम् इति 'वैश्वदेव्यामिक्षा' इति वाक्याधीनबोधानन्तरं तादृशाकाङ्क्षायाः यागेऽभावात् । यत्र उत्पत्तिवाक्ये गुणाश्रवणम् 'अग्निहोत्रं जुहोति' इत्यादौ तत्र 'दध्ना जुहोति' इत्यनेन गुणविधानं युज्यते ।

द्वितीयतृतीयपादे प्रकरणान्तरात् कर्मभेदो निरूपितः । प्रकरणान्तरं नाम अनुपादेयविशिष्टानुपस्थितिः । देशः, कालः, निमित्तं, फलं संस्कार्यमिति पञ्चानुपादेयानि । 'उपसद्भिः चरित्वा मासमग्निहोत्रं जुह्वति' इति विहितं मासाग्निहोत्रं नित्याग्निहोत्राद्भिन्नम् । उपादेयत्वं कृतिविषयत्वम् । विधेयत्वमज्ञातज्ञाप्यत्वम् । तदुभयमपि एकत्र प्रायो भवेत् । मासमग्निहोत्रं जुह्वति इत्यत्र मासस्योपादेयत्वं नास्ति, उपादेयत्वं धात्वर्थे एवेति वक्तव्यम् । तत्रैव विधेयत्वं वक्तव्यमपि नोच्यते, विहितस्य विधानायोगात् ।

देशस्योदाहरणम्- 'सरस्वत्या दक्षिणेन तीरेणाऽग्नेयोऽष्टाकपालः' इत्यत्र प्रसिद्धाग्नेयाद्भिन्नोऽग्नेयः ।

निमित्तस्योदाहरणम् - 'सत्रायागूरणं विश्वजिता यजेत' इति । आगूरणं - सङ्कल्पः सत्राय सङ्कल्पं कृत्वा सत्राकरणे निमित्ते विहितो विश्वजिद्यागः प्रसिद्धविश्वजिद्यागाद्भिन्नः ।

फलस्योदाहरणम् - प्रसिद्धाग्नेयाद् भिन्नः 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति विहित आग्नेयः । अत्र अनुपादेयभूतफलविशिष्टप्रसिद्धाग्नेयानुपस्थितिर्भवति ।

संस्कार्यस्योदाहरणम् - 'औदुम्बरीं प्रोक्षति' इति । अत्र व्रीहिप्रोक्षणाद्भेदः औदुम्बरीप्रोक्षणे भवति । औदुम्बरी संस्कार्या । एवं प्रमाणषट्कगम्यः कर्मभेदो निरूपितः ।

द्वितीयचतुर्थे 'यावज्जीवमग्निहोत्रं जुहोति' इति वाक्यं क्लृप्तफलात् फलान्तरार्थं जीवनरूपनिमित्तवशेनाग्निहोत्रस्य विनियोगान्तरं विधत्ते इत्युक्तम् । फलान्तरं च प्रत्यवायपरिहारः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यनुष्ठानवद्विधेयकत्वम् । तदनुष्ठानव्याप्यत्वं तदनुष्ठानाभावे व्याप्याभावप्रतियोगित्वोभयवत्वतन्निमित्तत्वम् इति यावत् ।

एवं शाखान्तरेष्वग्निहोत्रादिकं न भिद्यत इति निरूपितम् ।

तृतीयाध्यायेऽङ्गत्वनिरूपणं क्रियते । अङ्गत्वं नाम परोद्देशेन प्रवृत्तकृतिकारकत्वेन विहितत्वम् । 'व्रीहीन् प्रोक्षति' इत्युदाहरणम् - व्रीह्युद्देशेन प्रवृत्तस्य पुरुषस्य या कृतिः, तत्कारकत्वेन विहितत्वं तत्र करणत्वेन विहिते प्रोक्षणेऽस्तीति समन्वयः । कृतिकारकत्वेन विहितत्वं च कृतिकारकत्ववितहविषयतानिरूपितप्रवर्तनाविषयत्वम् ।

अङ्गत्वबोधकानि प्रमाणानि षट् । तानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि । तत्र श्रुतिर्नाम अङ्गत्वघटकीभूत-परोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य मुख्यविशेष्यतया अवगाहमाना या शक्त्यधीनोपस्थितिः, तज्जनकः शब्दः । 'दध्ना जुहोति' इत्यत्र करणत्वं शक्त्या तृतीयाविभक्त्या उपस्थाप्यते । अत्र परः होमः । स च धातुना लभ्यते, कृतिराख्यातार्थः । होमस्य कृतौ उद्देश्यत्वं संसर्गमर्यादया लभ्यते, इति करणत्वरूपकारकत्वमात्रं तृतीयाश्रुत्यर्थः । इदं च लक्षणं मुख्यविनियोक्तृश्रुतेरेव लक्षणम् । 'दध्ना जुहोति' इत्युदाहरणम् । इयं श्रुतिस्त्रिधा-विधात्री, अभिधात्री, विनियोक्त्री चेति । प्रवर्तनावाचकलिङाद्यात्मिका विधात्री, अभिधात्री व्रीह्यादिश्रुतिः, विनियोक्त्री श्रुतिः सम्बन्धबोधिका । सा विभक्तिरूपा, एकाभिधान-रूपा, एकपदरूपा चेति त्रिधा । 'दध्ना जुहोति, आहवनीये जुहोति' इत्यादौ तृतीयादिविभक्तिश्रुतिः । एकाभिधानश्रुत्या 'पशुना यजेत' इत्यत्र तृतीयार्थकरणत्वे तदर्थयोः पुंस्त्वैकत्वयोरन्वयः । 'यजेत स्वर्गकामः' इत्यत्र एकपदश्रुत्या अर्थभावनायां यागस्यान्वयः । अत्र एकपदश्रुतिस्थले, एकाभिधानश्रुतिस्थले च करणत्वं संसर्गमर्यादया भासते, तथा उद्देश्यत्वमपि, अतः तत्र श्रुतित्वव्यवहारो भाक्तः । एवं च एकाभिधानैकपदश्रुतिभिन्नश्रुतीनां सर्वासां लक्ष्यत्वं वक्तव्यम् । वाचकशब्दमात्रे श्रुतित्वव्यपदेशस्य सत्त्वात् । परन्तु विधातृ-अभिधातृ-श्रुत्योः पूर्वोक्तलक्षणं न समन्वेतीति चेत्, न, अङ्गत्वघटकी-भूतेत्यादिलक्षणं विभक्तिरूपाया विनियोक्तृश्रुतेरेव लक्षणमिति निर्णयात् ।

लिङ्गं नाम योग्यतापरपर्यायं सामर्थ्यम् । सा च योग्यता

श्रुतिकल्पनाद्वारा अङ्गत्वे प्रमाणम् । 'बर्हिर्देवसदनं दामि' इति मन्त्रः स्वनिष्ठबर्हिर्लवनाङ्गताबोधकश्रुतियुक्तः, बर्हिर्लवनप्रकाशनसामर्थ्यात्, यत्र यदर्थप्रकाशनसामर्थ्यं तत्र स्वनिष्ठतदङ्गताबोधकश्रुतियुक्तत्वम् यथा प्रत्ययवचनाभ्यां विनियुक्ते मन्त्रे इति अनुमानमेवात्र कल्पना । यद्यत्र अङ्गताबोधकश्रुतियुक्तत्वं न स्यात्, तदा मन्त्रस्य व्यर्थत्वं स्यात् इति तर्कः सहकारी । इदं च लिङ्गं मुख्यार्थे एव विनियोजकम्, न गौणार्थेऽपि । अत्र उलपराजिरूपतृणविशेषे न विनियोगोऽस्य मन्त्रस्य ।

वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरविषयक-शक्त्यनधीनबोधप्रयोजकपदद्वयसमभिव्याहारः । 'धेनुर्दक्षिणा' इत्युदा-हरणम् । तत्र धेनुपदस्य धेनौ शक्तिः । तदुत्तरप्रथमायास्तु करणत्वे लक्षणा । दक्षिणापदस्यानतिसाधनद्रव्यवाचिनः तदेकदेशे अनतौ लक्षणा ।

प्रकरणं नामोभयाकाङ्क्षा । अङ्गगतप्रयोजनाकाङ्क्षासहितप्रधानगतेति-कर्तव्यताकाङ्क्षा प्रकरणम् इति यावत् । अतः दर्शपूर्णमासयोः प्रयाजानु-याजादीनां च परस्पराङ्गाङ्गिभावः । इदं च द्विविधम्- महाप्रकरणम्, अवान्तरप्रकरणं च । यत्र प्रधानस्येतिकर्तव्यताकाङ्क्षा तत्र महाप्रकरणेन विनियोगः, यथा प्रयाजानां दर्शपूर्णमासयोः । यत्राङ्गेतिकर्तव्यताकाङ्क्षा तत्र अवान्तरप्रकरणम् । यथा- 'अतिहायेडो बर्हिःप्रति समानयते' 'जुह्वामौपभृतं प्रयाजशेषेण हवींषि अभिघारयति' इति वाक्यद्वयमध्ये पठितस्य अभिक्रमणस्य प्रयाजहोमाङ्गत्वम् । अवान्तरप्रकरणस्य महा-प्रकरणाद्बलीयस्त्वात् नाभिक्रमणस्य महाप्रकरणात् दर्शपूर्णमासाङ्गत्वम् ॥

स्थानं नाम इतिकर्तव्यतात्वेन सम्बन्धायोग्ययोरुपस्थितिः । यथा-सान्नाय्यपातशोधनविधिसन्निधौ पठितस्य 'शुन्धध्वम्' इति मन्त्रस्य सान्नाय्यपात्रशोधनाङ्गत्वम् ।

समाख्या यौगिकं पदम् । तया हौत्राध्वर्यवादिसमाख्यया ऋग्वेदादिविहितपदार्थेषु होत्रादीनां कर्तृत्वं सिद्ध्यति । ऋग्वेदादिविहितपदार्थेषु होत्रादिसमाख्या वेदे प्रसिद्धा ।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां मध्ये उत्तरोत्तरं दुर्बलम्, विलम्बितप्रवृत्तिकत्वात् ।

दर्शपूर्णमासप्रकरणे 'वेद्यां हर्वीष्यासादयति' इति पठितम् । इदं वेद्याधिकरणकमासादनम् अङ्गप्रधानसाधारणसर्वहविरर्थम् । प्रकरणेन वाक्यसङ्कोचाभावाद् असङ्कुचितेन वाक्येनाङ्गप्रधानसाधारणसर्वहविरर्थत्वमेवास्य वेद्यधिकरणकस्यासादनस्य । प्रकरणं हि प्रधानस्येति तदर्थत्वमेव स्यात् तेन ।

एवं वरणं दक्षिणादानं च आध्वर्यवम् इति समाख्यया अध्वर्युकर्तृकमेव इति शङ्कायां समाख्याया बाध एवेति सिद्धान्तः । वरणाभावे अध्वर्युत्वमेव न सिद्ध्यतीति अध्वर्युत्वसम्पत्तये प्रथमं क्रियमाणं वरणमध्वर्युभिन्नकृत्यमेवेति समाख्याया बाधः । एवञ्च बाधे आवश्यके सति वरणं स्वामिकर्तृकमेवेति निर्णीयते । एवं दक्षिणादानमपि यजमानकर्तृकमेव । अन्यथा प्रयोगवाक्यावगतस्वामिकर्तृकत्वबाधापत्तिः । श्रुत्यादीनां बलाबलविचारः विस्तरेणोपलभ्यते ग्रन्थेषु ।

चतुर्थाध्याये प्रयोज्यत्वं विचार्यते । तृतीयाध्याये शेषिनिरूपितशेषत्वे निरूपिते चतुर्थे प्रयोजकनिरूपितप्रयोज्यत्वं निरूप्यते । प्रयोजकत्वं चानुष्ठापकत्वम् । यद्यपि अनुष्ठापकत्वं विधेरेव, तथापि यदुद्देशेनानुष्ठानं विधिना बोध्यते । तस्यापि प्रयोजकत्वव्यवहारः । एवञ्च कृत्युद्देश्यतया विधिविषयत्वं प्रयोजकत्वम् इह विवक्षितम् । कृतिविधेयतया

विधिविषयत्वं प्रयोज्यत्वम् । क्रत्वर्थानां क्रतुः प्रयोजकः । पुरुषार्थानां फलं प्रयोजकम् । स्वयं प्रार्थितफलोद्देशेन विहितत्वं पुरुषार्थत्वम् । स्वयं प्रार्थितत्वं च शास्त्राधीनेष्टसाधनताज्ञानानधीनेच्छाविषयत्वम् । स्वर्गः स्वयं प्रार्थितः । तदर्थः यागादिः पुरुषार्थः । शास्त्राधीन इत्यनुपादाने 'उद्भिदा यजेत पशुकामः' इत्यादौ पश्वादेरिष्टसाधनताज्ञानाधीनेच्छा-विषयत्वसत्त्वात् स्वयं प्रार्थितत्वं न स्यात् । एतद्दलोपादाने तु न दोषः। तत्र पशोरिष्टसाधनत्वज्ञानस्य शास्त्राधीनत्वाभावात् । स्वयंप्रार्थित-भिन्नोद्देशेन विहितत्वं क्रत्वर्थत्वम् । प्रयाजादयः क्रत्वर्थाः ।

चातुर्मास्येषु 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति पठितम् । तत्र दध्यानयनस्य आमिक्षा वाजिन-मित्युभयमेव किं प्रयोजकम्, उत आमिक्षैव प्रयोजिका इति संशये उभयमेव प्रयोजकम् इति पूर्वपक्षः, सा वैश्वदेव्यामिक्षा इति दध्यानयनवाक्योत्तरं पठितम् । तत्र तच्छब्देन प्रधानपरामर्श-स्यौत्सर्गिकत्वात् पूर्ववाक्ये चामिक्षाया एव प्राधान्यस्यावगतत्वात् सैव प्रयोजिका । न च कथं आमिक्षायाः प्राधान्यमवगम्यत इति वाच्यम्, 'तप्ते पयसि दध्यानयति' इति पूर्ववाक्येन 'तप्तं पयः दधिकरणकानयनेन संस्कुर्यात्' इत्यर्थस्य लाभात् पयसः प्राधान्यसिद्धेः । आमिक्षा हि पयोरूपैव । वस्तुतः तच्छब्देन प्रधानपरामर्शस्य वक्तव्यत्वात् तच्छब्दोपात्तायाः आमिक्षायाः पूर्ववाक्ये प्राधान्यं वक्तव्यम् इति तस्याः दध्यानयनवाक्ये प्राधान्यं वक्तव्यमिति सारः । आमिक्षायाः प्राधान्यानुरोधेन पूर्वोक्तरीत्या वाक्यार्थो वर्ण्यत इति यावत् । तदनुरोधेन सप्तम्याः कर्मत्वे लक्षणापि कार्या । वाजिनमनुनिष्पन्नद्रव्यम् । तद्यागः प्रतिपत्तिकर्म ।

दर्शपूर्णमासयोः 'पुरोडाशकपालेन तुषानुपवपति' इति विहितः तुषोपवापः कपालोपादानं प्रति न प्रयोजकः, तस्य पुरोडाशश्रपणप्रयोज्यत्वात् । एवं 'प्रयाजशेषेण हवींषि अभिघारयति' इत्यत्र हविरभिघारणं प्रयाजशेषप्रतिपत्तिः । न च हवींषि इति द्वितीयया हविषां प्राधान्यावगतेः उपयुक्तसंस्कारापेक्षया उपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाच्च हविःसंस्कारकमेवाभिघारणम् इति वाच्यम् । अदृष्टकल्पनाप्रसङ्गात् । उपयुक्तसंस्कारत्वेऽपि आकीर्णकरतानिवारणरूपं दृष्टं प्रयोजनं सम्भवति । तथा च- 'प्रयाजशेषं हविष्षु अभिघारयेत्' इति वाक्यार्थः पर्यवसन्नः ।

अग्नीषोमीयपशौ 'यूपस्य स्वरूं करोति' इति श्रूयते । अत्र यूपो यथा छेदनस्य प्रयोजकः तथा स्वरूरपि प्रयोजकः, स्वरोः प्रयोजकत्वे करणं यूपशब्दलक्षितः खादिरादिवृक्षः । छेदनादयो धर्माः इति कर्तव्यतात्वेन च अन्वीयन्ते । 'छिन्नेन वृक्षेण स्वरूरुत्पादनीयः' इति वाक्यार्थः इति पूर्वपक्षः, सिद्धान्तस्तु 'यः शकलः प्रथमः परापतेत्, स स्वरूः' इति वचनेन स्वरूशब्दार्थो निष्पादितः । तेन यूपप्रयुक्ते छेदने स्वरूरनुनिष्पद्यते । एवं च यूपस्य स्वरूं करोति' इत्यत्र स्वर्वर्थं छेदनं न विधीयते । उक्तनिर्वचनानुरोधेन यूपार्थछेदनेनैव स्वरोन्तरनिष्पत्तिरिति लभ्यते ।

'यस्य पर्णमयी जुहूर्भवति' इत्यत्र पर्णमयत्वं किं क्रत्वर्थं, किं पुरुषार्थं, किमुभयार्थं वा इति संशयः । अव्यभिचरितक्रतुसम्बन्धेन क्रतोरुपस्थित्या तदर्थत्वेनैव प्रयोजनाकाङ्क्षायाः शान्तत्वेन केवलक्रत्वर्थत्वमेवेति सिद्धान्तः । 'न स पापं श्लोकं शृणोति' इत्यर्थवादस्य फलसमर्पकत्वाभावाच्च केवलक्रत्वर्थत्वमेव ।

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र किं सोमयागमात्रस्यैव फलोद्देशेन विधानम्, किं प्रायणीयादीनामपीति विचारः । तत्र यागत्वाविशेषेण प्रायणीयादीनामपि फलोद्देशेन विधानम् इति पूर्वपक्षः । न च ज्योतिष्टोमशब्दः कुत्रचित् यागविशेषे प्रसिद्धः । स शब्दः ज्योतिराख्यस्तोमसम्बन्धं निमित्तीकृत्य प्रवर्तते । 'यूपं छिनत्ति' 'शाटकं वय' इत्यादौ भाविप्रवृत्तिनिमित्तमादाय यथा व्यवहारः, तद्वत् उत्तरकालिकं स्तोमसम्बन्धमादाय ज्योतिष्टोमशब्दस्य प्रवृत्तिः सोमप्रायणीयादिषु सर्वेषु वक्तव्या इति प्रष्टुरभिप्रायः । सिद्धान्तस्तु- 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति क्रमविधायकवाक्येन स्वाश्रयऋक्साध्यस्तोत्रापाकरणपूर्वकालिकग्रहणकत्वरूपः स्तोमसम्बन्धः सोमयागेऽवगम्यते । अतः ज्योतिष्टोमनाम्नः सोमयागे प्रसिद्धत्वात् यजिसंकोच उपपद्यते । प्रायणीयादयस्तु फलसम्बन्धरहिता तदङ्गभूता भवन्ति । पञ्चमाध्याये क्रमनिरूपणं क्रियते । क्रमो नाम एकपदार्थनिष्ठापरपदार्थानन्तर्यम् । क्रमस्तु श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभिः प्रमाणैः नियम्यते । क्रमस्तु एतैः प्रमाणैः विनापि कदाचित् पदार्थानां भवति, परन्तु तन्नियमः एतत्प्रमाणबोध्यः । श्रुतिर्नाम वृत्त्या क्रमबोधकः शब्दः। अथशब्दादिः उदाहरणम् । द्वादशाहे सत्रात्मके 'अध्वर्युः गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति । अत्र क्त्वाप्रत्ययेन पूर्वकालवाचकेन लक्षणया आनन्तर्यरूपक्रम उच्यते । अर्थो नाम प्रयोजनम् । स च व्युत्क्रमेऽनुष्ठाने सति अनुपपद्यमानः क्रमं नियमयति । 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इति पाठक्रमोऽस्ति । तत्क्रमे तु यवागूपाकस्य होमानन्तरं क्रियमाणस्य होमसाधनत्वरूपप्रयोजनं न स्यात् । अतः प्रयोजनवशेन क्रमनिर्णयः कार्यः । प्रथमं यवागूपाकः, ततः अग्निहोत्रं जुहोति इति । पाठक्रमस्योदाहरणम्- 'समिधो यजति, तनूनपातं

यजति, इडो यजति' इति क्रमेण पठितानां यागानां क्रमनियमः पाठक्रमेण भवति । तेन क्रमेण पदार्थानां पाठः तेन क्रमेणानुष्ठानम् इति यावत् ।

'सप्तदश प्राजापत्यान् पशूनालभते' इत्यत्र विहिताः पशवः प्रजापतिदेवताकाः सहानुष्ठीयन्ते । तत्र उपाकरणनियोजनादयः प्रतिपशु आवर्त्यन्ते, आवृत्तिश्च येन क्रमेण पशूनामुपाकरणं कृतं तेनैव क्रमेण नियोजनं कर्तव्यम् इति भवति । प्रथमं सर्वेषां पशूनामुपकरणं क्रियते । ततः येन क्रमेण उपाकरणमभवत् तेनैव क्रमेण नियोजनं भवति । अयमेव प्रवृत्तिक्रमः । प्रकृते उपाकरणप्रवृत्तिः क्रमनियामिकेति । 'वैश्वदेवीं कृत्वा प्राजापत्यैः चरन्ति' इति वाक्येन सप्तदशपशूनां साहित्यं लभ्यते । तच्च साहित्यं येन क्रमेण पशूनामुपाकरणं कृतम्, तेन क्रमेण नियोजनाकरणे बाध्यते, तथा सति केषाञ्चित् पशूनाम् उपाकरणनियोजने न्यून-व्यवधानवती भवतः, केषाञ्चित् अधिकव्यवधानवती भवत इति । साहित्यं चाधिकव्यवधानराहित्यरूपमेव । प्रवृत्तिक्रमस्याश्रयणे उपाकरणाव्यवहितोत्तरत्वं प्रकृतिप्राप्तं रक्षितं भवति ।

सप्तदशप्राजापत्यपशुस्थले प्रकृतितः प्राप्तमुपाकरणनियोजनयोरव्यव-धानं षोडशक्षणाधिकक्षणव्यवधानाभावरूपमेवेति । वस्तुत उपाकरण-नियोजनयोः साहित्यं प्रकृतौ एककालावच्छिन्नत्वरूपमेव । तच्चा-सम्भवीति तयोरव्यवधानरूपं साहित्यमेव तत्राश्रीयते । प्राजापत्ययागे तु तत् साहित्यं षोडशक्षणाधिकक्षणव्यवधानाभावः ।

स्थानं नाम क्लृप्तक्रमपदार्थोपस्थितिः । सा एकसंबन्धिज्ञानमुद्रया अपरस्य सम्बन्धिनः पदार्थस्य स्मारिका भवति । प्रकृतौ अग्नीषोम-प्रणयनानन्तरमौपवसथ्याहे दैक्षः पशुरनुष्ठीयते । अश्विनग्रहोत्तरकाले

पञ्चमेऽहनि सवनीयः पशुरनुष्ठीयते । उदयनीयानन्तरं सुत्योत्तरमनुबन्ध्यः क्रियते । साद्यस्क्रो नाम ज्योतिष्टोमविकारः । तत्र सर्वमग्नीषोमीय-प्रणयनादि सौत्याह एव क्रियते । तत्र 'सह पशूनालभते' इति श्रुतम् । त्रयाणामपि पशूनामालम्भः प्रधानेन विकृतियागेन प्रत्यासक्तिलाभा-याश्विनग्रहोत्तरमेव कार्यः । अश्विनस्योपस्थापकस्य सत्त्वात् सवनीय-स्योपस्थितिः । ततश्च उपस्थितिरूपेण स्थानेन सवनीयस्य पशोः प्रथम-मुपाकरणम् । न तु दैक्षस्य । तदुपस्थापकस्य भ्रष्टत्वेन स्थानाभावात् । एवञ्च सवनीयस्योपकरणं प्रथमम्, ततः दैक्षस्योपाकरणम्, ततः अनुबन्ध्यस्य इति नियमः । सवनीयस्य प्राथम्यं स्थानान्निहितम् । स्थानभ्रष्टयोः दैक्षानुबन्ध्ययोः प्रकृताविव पूर्वापरीभावः ।

मुख्यक्रमोऽपि अङ्गक्रमनियामकः । सारस्वतौ भवतः एतद्वै दैव्यं मिथुनं यत् सरस्वती सरस्वांश्च इति विहिते स्त्रीपुंदैवत्ये यागद्वये स्त्री-दैवत्यस्य प्रथममनुष्ठानम्, ततः पुंदैवत्यस्य, याज्यानुवाक्यपाठक्रमात् । तत्रातिदेशप्राप्तौ निर्वापौ प्रधानक्रमेणैव कार्यौ । द्वितीयस्य प्रधानस्य कृते निर्वापः प्रथमश्चेत् तेन प्रधानेन सह तन्निर्वापस्याधिकव्यवधानापत्तिः ।

यद्यपि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिक्रमा इत्येव क्रमनियामक-प्रमाणानि लिख्यन्ते ग्रन्थेषु । तत्र पूर्वपूर्वेषामुत्तरोत्तरापेक्षया दौर्बल्यञ्च, तथापि सूत्ररीत्या प्रमाणानां निर्देशः भिन्नक्रमेणेति तदनुरोधेन निरूपणमत्राकारि ।

क्रमविचारे पदार्थानां काण्डानुसमयः, पदार्थानुसमयश्चेति क्रमद्वयं पठ्यते । 'सप्तदश प्राजापत्यान् पशूनालभेत' इत्यत्र एकैकस्य पशोः उपाकरणनियोजनादिकं कृत्वा अन्यस्य पशोः तत्सर्वं क्रियत इति क्रमश्चेत् सः काण्डानुसमयः । सर्वेषां पशूनां प्रथममुपकरणं कृत्वा ततः

तेनैव क्रमेण नियोजनं क्रियते चेत् पदार्थानुसमयः । अत्र पदार्थानुसमय एवेति सिद्धान्तः ।

'एकादश प्रयाजान् यजति' वाक्यं विकृतौ श्रूयते । प्रकृतौ दर्शपूर्णमासयोः पञ्च प्रयाजाः श्रुताः । तेषामेव प्राकृतानां प्रयाजानां सङ्ख्याविवृद्धिः विकृतौ कथिता । प्रतिप्रधानं गुणावृत्तिरिति न्यायेन एकादशत्वसङ्ख्यायाः प्रत्येकं सम्बन्धो वक्तव्यः । तत एकैकः प्रयाज एकादशवारमावर्तनीय इति पूर्वपक्षः । न हि एकैकशः समुदितानां वा सङ्ख्यान्वयः सम्भवति । एकस्मिन् पञ्चसु वा एकादशत्वं हि बाधितम् । अतः सङ्ख्यान्वयार्थं जघन्यप्रयाजपदेन प्रयोगो लक्षणीयः । सहितप्रयाजप्रयोगेषु एकादशत्वसङ्ख्या सम्पाद्या इत्यर्थः । प्रयाजप्रयोगा एकादश इति यावत् ।

एवं 'षडुपसदः' इत्यत्र उपसदां त्रित्वे प्रकृतौ सिद्धे सति षट्त्वं कथम् इति चेत् । नात्र दण्डकलितवदावृत्तिः, तथासति आदितः तृतीयोपसदं यावद् एकवारं कृत्वा पुनः प्रथमद्वितीयतृतीयोपसदः कार्या इति भवेत् । लोके 'त्रिः अनुवाकः पठ्यताम्' इत्यत्र तथैव दर्शनम् । किन्तु स्वस्थानविवृद्धिरेव । प्रथमां द्विरभ्यस्य द्वितीयां च द्विरभ्यस्य तृतीयाऽपि तथा कर्तव्या इति । दण्डकलितवदावृतौ स्वीक्रियमाणायां प्राकृतक्रमबाधः स्यात् । तृतीयाया उपसदः करणानन्तरं प्रथमायाः करणे प्राकृतक्रमबाधः प्रकृतौ तथाऽकरणम् ।

श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिक्रमेषु पूर्वः पूर्वः उत्तरोत्तरापेक्षया प्रबल इति पूर्वमेवोक्तम् । यथा 'आश्विनो दशमो गृह्यते' इति आश्विनग्रहस्य दशमत्वश्रुतिः 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति' इति तृतीयत्वं बोधकपाठक्रमापेक्षया प्रबला । एवं

प्रधानसन्निकर्षापादकमुख्यश्रुत्यपेक्षया अङ्गानां परस्परप्रत्यासत्तिसम्पादकप्रवृत्तिक्रमो दुर्बलः । अत्र विवरणादिकं पञ्चमचतुर्थे स्पष्टम् ।

षष्ठाध्यायेऽधिकारो निरूप्यते । अधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम् । ऋत्विजां कर्तृत्वे सत्यपि फलभोक्तृत्वं नास्ति । श्राद्धे पितॄणां फलभोक्तृत्वमस्ति चेदपि कर्तृत्वं नास्ति । तिरश्चां नाधिकारः, असमर्थत्वात् अविद्वत्त्वाच्च । 'स्वर्गकाम' इत्यत्र पुंस्त्वस्य श्रवणेऽपि तत् अधिकारे विशेषणम्, अधिकारी च फलं प्रति उद्देश्य इति उद्देश्यविशेषणमविवक्षितमिति पुंस्त्वस्याविवक्षितत्वात् स्त्रिया अपि अधिकारः । स्वर्गकामविशेषणस्य पुंस्त्वस्याधिकारिविशेषणस्याविवक्षायामपि, आख्यातोपात्तैकत्वस्य उपादेयभूतकर्तृगतस्य विवक्षा भवत्येव । अतो दम्पत्योः पृथक्पृथग् याज्ञिकत्वमिति प्राप्ते, प्रत्येकप्रयोगे अन्यतरकर्तृकाज्यावेक्षणान्वारम्भादिपदार्थलोपेन क्रतुवैगुण्यं स्यादिति सहप्रयोग एवेति सिद्धान्तः । आख्यातोपात्तमेकत्वं हि न कर्तृगतम्, अपि तु दम्पत्योः व्यासज्यवृत्ति यत्कर्तृत्वम्, तद्गतमिति निर्णयः । 'पाणिग्रहात्तु सहत्वं कर्मसु तथा पुण्यफलेषु' इति प्राह आपस्तम्बोऽपि ।

एवमध्ययनविधिसिद्धविद्यारहितानां शूद्राणां क्रतुषु नाधिकारः, उत्तरक्रतुविधयो हि 'सोमेन यजेत' इत्यादयो विद्यावन्तमग्निमन्तं प्रत्येव प्रवृत्तेः । न हि ते विधयः तद्रहितानां शूद्राणां विद्यामाक्षिपन्ति । सिद्धाग्निविद्यस्य लाभेऽग्निविद्याक्षेपकल्पनस्य गुरुत्वात् ।

त्रैवर्णिकभिन्नस्यापि रथकारस्य 'वर्षासु रथकारोऽग्नीनादधीत' इति वचनबलाद् आधानमात्रेऽधिकार उच्यते । तथैव निषादस्थपतेः रौद्रवास्तुमयचरौ अधिकारः 'एतया निषादस्थपतिं याजयेत्' इति वचनबलेन स्वीक्रियते । निषादश्च सङ्करजातिविशेषोऽत्रैवर्णिकः ।

'ऋद्धिकामाः सत्रमासीरन्' इति विहिते सत्रयागे अनेककर्तृकत्वं भवति । तत्र सर्वे यजमानाः ऋत्विक्कार्ये विनियुज्यन्ते । तत्र फलं सर्वैरपि कर्तृभिरवयवशः प्राप्यत इति पूर्वपक्षे सर्वैरपि प्रत्येकं कृत्स्नमेव फलं भुज्यत इति सिद्धान्तः कृतः । ऋद्धित्वस्वर्गत्वादिव्यासज्यवृत्ति न भवति । अतः फलमेकं सर्वैरपि मिलित्वा भुज्यते - इत्यपि न ।

नित्यकर्मसु यथाशक्त्यङ्गोपसंहारशक्तानामधिकारः, काम्यकर्मसु सर्वाङ्गोपसंहारशक्तानामेवाधिकारः । नित्यनैमित्तकयोरकरणे प्रत्यवाय-श्रवणात् अङ्गेषु यथाशक्तिन्यायः । काम्ये न तथा । एवं देवतायाः आहवनीयाद्यग्नेः मन्त्राणां प्रयाजादिक्रियायाश्च न प्रतिनिधिः । उक्तं च 'न देवताग्निशब्दक्रियामन्यार्थत्वात्' इति । षष्ठचतुर्थे उत्पन्नहविर्नाशे आज्येन समापनम् इति विषयो विचारितः । षष्ठपञ्चमे अपच्छेद-न्यायादिः विचारितः । षष्ठषष्ठे सत्रे समानकल्पानामेवाधिकार इति स्थितम् । कर्तृषु मध्ये कस्यचित् 'नाराशंसः द्वितीयः प्रयाजः' कस्यचिच्च 'तनूनपाद् द्वितीयः प्रयाजः' इति चेत् एककल्पानुष्ठाने अन्यस्य कर्तुः वैगुण्यं स्यात् इति समानकल्पानामेव कर्तॄणां सत्रेऽधिकार इति । षष्ठसप्तमे 'विश्वजिति सर्वस्वं ददाति' इत्युक्ते सर्वस्वे पित्रादीनां ज्ञातित्वेनाभिमतानामपि देयत्वेनान्तर्भावः स्यादिति शङ्कां विधाय, तेषां यथेष्टविनियोगार्हत्वं नास्तीति न दानम् इति समाहितम् । षष्ठाष्टमे अवकीर्णिकर्तृकगर्दभालम्भे किम् आहवनीयाग्नौ उत लौकिकाग्नौ इति विचारं कृत्वा अवकीर्णिब्रह्मचारिकर्तृकः स यागः लौकिकाग्नौ एव इति निरूपितम् । तथा दैक्षपशुः छाग एव, नाश्वादिः इति नियमोऽपि निर्णीतः तत्र ।

एवमुपदेशषट्करूपमीमांसाप्रथमभागस्य परिचयः कृतः ।

## जीवात्मस्वरूपम्

भाट्टमीमांसकमते जीवात्मा विभुः । जीवात्मानोऽनन्ताः । श्रुतिषु स्मृतिषु च आत्मैकत्ववादा यद्यपि उपलभ्यन्ते, ते 'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' 'उत्तमः पुरुषस्त्वन्यः' इत्यादि-वचनैः प्रत्यक्षादिभिश्च विरुद्ध्यन्ते । आत्मनः इन्द्रियाणां च भेदः, आत्मनो विभुत्वम् इत्यादयः शास्त्रदीपिकायां तर्कपादे विवृताः ।

## मोक्षस्वरूपम्

प्रपञ्चसम्बन्धो बन्धः । तद्विलयो मोक्षः । बन्धः त्रिविधो भोगायतनं शरीरम्, भोगसाधनानि इन्द्रियाणि, भोग्याः शब्दादयो विषयाश्चेति । भोगशब्देन सुखदुःखविषयकसाक्षात्कार उच्यते । मोक्षस्वरूपविषये मतान्तरखण्डनपूर्वकं स्वमतनिरूपणमकारि शास्त्रदीपिकायाम् । मोक्षे सुखदुःखविहीनः भवति आत्मा ।

## मुक्त्युपायः

तत्त्वज्ञानं मोक्षोपायः । 'यो हि देहाद् विविक्तमनन्तमजरममरम-दुःखमात्मानं जानाति । तस्य देहसम्प्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां कर्मणा-मननुष्ठानादेव असत्त्वात् देहान्तरानुत्पत्तेः अत्यन्तासम्बन्धः शरीरेण भवति । विशेषावगत्यर्थम्–'तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वात् देहो नोत्पद्यते पुनः' (श्लो.वो.सम्बन्धाक्षेपपरिहारे १०८) इत्यादिग्रन्थः मीमांसाकोशे वर्तमानः द्रष्टव्यः ।

## मीमांसाशास्त्रस्योपयोगः

इदं मीमांसाशास्त्रं बहुप्रकारेणोपयुज्यते । अत्रत्याधिकरणरचना, तथा

युक्तयः, निर्णयाश्च आधुनिकन्यायरङ्गे सुतरां मनीषिभिराद्रियन्ते । यथा षष्ठाध्याये विश्वजिति सर्वस्वदानेऽपि मातापितृपन्त्यादीनां दानं नास्ति तत्र यथेष्टविनियोगार्हत्वरूपस्वत्वं नास्ति, इति विषय उपपादितः । तथैव राज्यस्य दानं नास्ति । तत्रापि राज्ञः स्वामित्वं नास्ति इत्युक्तम् । अनेन अधिकरणेन राज्ञोऽधिकारसीमा निर्णीता शास्त्रे । अयं विषयोऽधुनापि प्रासङ्गिकः ।

अस्मिन् निबन्धे सङ्क्षेपेण मीमांसाशास्त्रस्य प्रथमषट्कस्य परिचयो लिखितः । अत्र न्यायमालायाः भाट्टसारस्य च रीतिरनुसृता । नूतनोंऽशो न कोऽपि उत्प्रेक्षित इति । शम् ॥

------

**पादटिप्पण्यः**

१. धारावाहिकविज्ञानं घटादेरुत्तरोत्तरम् । सद्भावं बोधयत्प्राज्ञैः प्रमाणमिति गीयते । उत्तरक्षणसद्भावो न हि पूर्वेण बोधितः ॥ 'कौमारिलमतोपन्यासः' (श्लोकसङ्ख्या-४.५)

२. 'अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिः' भाष्यकृतोदाहृतं वृत्तिकारवचनम् ।

# अद्वैतदर्शनम्

**डा. ए.वि. नागसम्पिगे**
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्,
पूर्णप्रज्ञविद्यापीठम्, बेङ्गळूरु.

समग्रेऽपि भारते प्रथितमिदमद्वैतदर्शनं सर्वत्र व्यापृतं च । 'सङ्क्षेपविस्तराभ्यां हि प्रवदन्ति मनीषिणः' इति न्यायेनाद्वैतसिद्धान्तसार एव निरूपयितुं शक्यते -

**'श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिषु ।**
**ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥'**[१]

ब्रह्म सत्यम्, जगन्मिथ्येति वादः 'अयमात्मा ब्रह्म'[२], 'अहं ब्रह्मास्मि'[३] 'तत्त्वमसि'[४] 'प्रज्ञानं ब्रह्म'[५] इति श्रुतिषु कण्ठरवेणैव प्रतिपादितः । 'वाचारम्भणं विकारो नामधेयम्'[६] इति भगवती श्रुतिः ब्रह्मव्यतिरेकेण कार्यजातस्यासत्त्व-माह। आह च सूत्रकारः- 'तदनन्यत्व-मारम्भणशब्दादिभ्यः'[७] । अत्र तदनन्यत्वं नाम तद्व्यतिरेकेणाभावः । उक्तोऽयमर्थः शारीरकभाष्ये- 'तस्माद् यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात् । एवमस्य भोक्तृभोग्यादि-प्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् ।'[८]

अत्र केचनाक्षिपन्ति कथं सर्वानुभवसिद्धं विश्वसत्यत्वमिह निराक्रियत इति । अत्र ब्रूमः- विश्वमिथ्यात्वं प्रमाणसिद्धमपह्नोतुं न शक्यते । यद्यपि व्यवहारावस्थायाम् ऐक्यतत्त्वसाक्षात्कारपर्यन्तं प्रतीयमानपदार्थानां यत् सत्त्वमनुभूयते तद् व्यावहारिकमिति ब्रूमः । व्यवहारावस्थायां सत्त्वेन

प्रतीयमाना अपि अमी भावाः न परमार्थतः सन्तः । यथा स्वप्नेऽर्थाः प्रतीयन्तोऽपि परमार्थदृष्ट्या न विद्यन्ते तथा । उक्तं चाचार्यपादैः 'नैष दोषः । सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः । स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । .... तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधाद् उपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः ।'[९]

**आचार्यपम्परा**

नारायणं पद्मभुवं वशिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपादं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्यान् अस्मद्गुरून् सन्ततमानतोऽस्मि ॥

इत्यद्वैतनय आचार्यपरम्परा श्रूयते ।

बौद्धदर्शन-जैनदर्शनाद्यवैदिकदार्शनिकैः वैदिकधर्मस्य दर्शनस्य चोत्सादनकाले शाङ्करदर्शनमिदं तत्तद्दर्शनविचारप्रणालीं पराकृत्य वैदिकसिद्धान्तं प्रत्यपीपददिति विजानन्त्येव दार्शनिकाः । शङ्कराचार्याणां दर्शनमिदं पद्मपादाचार्य-सुरेश्वराचार्य-वाचस्पतिमिश्र-प्रकाशात्ममुनि-चित्सुखाचार्य-विद्यारण्य-नृसिंहमुनि-अप्पय्यदीक्षित-मधुसूदनसरस्वतीप्रभृतिभिः विद्वद्धौरेयैः संवर्धितम् ।

**प्रमाणानि**

'प्रमाकरणं प्रमाणम्' इति प्रमाणलक्षणम्[१०] । अद्वैतवादिभिः प्रत्यक्ष-अनुमान-उपमान-आगम-अर्थापत्ति-अनुपलब्धयः षट् प्रमाणानि स्वीकृतानि । वस्तुस्वरूपानुगुणं विज्ञानं प्रमेत्युच्यते । तदुक्तं तत्र 'स्मृतिव्यावृत्तं प्रमात्वम् अनधिगताबाधितार्थविषयकज्ञानत्वम्'[११] इति ।

सिद्धान्ते चैतन्यरूपमेव ज्ञानं घटपटादिवृत्त्यवच्छिन्नं घटपटादिप्रमेत्युच्यते । उक्तं च परिभाषाकारेण- 'प्रत्यक्षप्रमा चैतन्यमेव'[१२] इति, 'चैतन्यरूपमेव ज्ञानमबाधितघटादिवृत्त्यवच्छिन्नं घटादिप्रमेत्युच्यते ।'[१३] इति च । अत्र चक्षुरादीनां करणत्वात् प्रमाणत्वव्यवहारः । तदुक्तम्- 'चैतन्यरूपमेव ज्ञानमबाधितघटादिवृत्त्यवच्छिन्नं घटादिप्रमेत्युच्यते । अत एव विशिष्टं चैतन्यं प्रति चक्षुरादेः करणत्वात् चक्षुरादि भवति प्रत्यक्षप्रमाणमिति ।'[१४] अत्रेदं सिद्धान्तरहस्यम्- 'यथा नद्यादौ विद्यमानं जलं चतुष्कोणाकारे केदारखण्डे प्रवहमानं सत् तदाकारमवतिष्ठते तथा सावयवमन्तःकरणं चक्षुरादीन्द्रियद्वारा बहिरागतं पुरःस्थितवस्त्वाकारेण परिणमते । एतमन्तःकरणपरिणाममेव वृत्तिशब्देन व्यवहरामः । विषयगतं चैतन्यमिह 'विषयचैतन्यम्' इत्युच्यते । अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं 'प्रमाणचैतन्यम्' । अन्तःकरणावच्छिन्नं चैतन्यं 'प्रमातृचैतन्यम्' । तत्र यथा तटाकोदकं छिद्रान्निर्गत्य चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादीन्द्रियद्वारा बहिर्निर्गत्य घटादिदेशं गत्वा तदाकारेण परि-णमते । सेयं वृत्तिरित्युच्यते । (अनुमत्यादिस्थले त्वन्तः-करणस्य वह्निदेशगमनं न भवति । वह्नेः चक्षुस्सन्निकर्षाभावात् ।) एतादृशवृत्तौ प्रतिबिम्बितं तदुपारूढं प्रमातृचैतन्यमस्ति । घटादिविषयावच्छिन्नं चैतन्यं (अधिष्ठानचैतन्यं) घटादावस्ति । घटाद्यावरकमज्ञानं च घटादौ विषयेऽस्ति । तथा च चैतन्याधिष्ठानवृत्त्याऽज्ञाननाशेऽनन्तरं विषयाधिष्ठानचैतन्यं व्यज्यते । अनन्तरं वृत्तिप्रतिबिम्बितं ज्ञातृचैतन्यं विषयावच्छिन्नचैतन्यं चैकीभवति । ततः 'मया ज्ञातो घटः' इत्यादिव्यवहारो भवति । तदुक्तम्-

**'स्वच्छेऽन्तःकरणेऽशिनिप्रसृमरे नेत्रादिमार्गोद्गते**
**तत्तद्ग्राह्यचयात्मना परिणते बिम्बीभवन्ती चितिः ।**

**एकाऽप्यर्थमनोविशेषकवशात् द्वैतं प्रपन्ना**
**हरत्यज्ञानं, प्रकटीकरोति विषयान् ज्ञातं मयेदं त्विति ।।'**[१५]

अत्रापीदं रहस्यमवधेयम्-

न केवलाया वृत्तेरज्ञाननाशकत्वम् । न वा चैतन्यस्याज्ञानस्फोरकत्वादज्ञाननाशकत्वम् । किन्तु वृत्त्युपारूढचैतन्यस्याज्ञाननाशकत्वमुपपन्नम् । तदुक्तम्-

**'तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ।**
**सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत् ।।'**[१६] इति ।

परोक्षज्ञानस्थले वृत्त्यभावात् (अन्तरेव वृत्तिसद्भावात्) प्रमाणचैतन्यप्रमातृचैतन्ययोरभेदात् ज्ञानं जायते । अत्र विषयावच्छिन्नचैतन्याभिव्यक्त्यभावाद् ज्ञानमिदं परोक्षमुच्यते ।

प्राक् प्रत्यक्षज्ञानमेव चैतन्यशब्देन व्यपदिष्टम् । चैतन्यमनादिनित्यम् । ज्ञानजनकत्वाद् इन्द्रियाणि प्रमाणानि भवितुमर्हन्ति । एवं च ज्ञानस्येन्द्रियजन्यत्वाभावात् कथं प्रत्यक्षप्रमेति व्यवहारः ? अस्येदमुत्तरम्- चैतन्यस्य स्वरूपतोऽनादित्वेऽपि, इन्द्रियजन्यत्वाभावेऽपि चैतन्याभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षजा । अनया दृष्ट्या वृत्तिविशिष्टचैतन्यं सादीत्युच्यते । ज्ञानस्यावच्छेदकत्वात् वृत्तेर्ज्ञानमिति व्यवहारः गौण एव । तदुक्तम्- 'चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यमादिमद् इत्युच्यते । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः । तदुक्तं विवरणे- ''अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्'' इति ।'[१७]

## ज्ञानानि अन्तःकरणपरिणामरूपाणि

ज्ञानानि पुनः सर्वाणि अन्तःकरणपरिणामरूपाणि। आह च भगवती श्रुतिः- 'कामः सङ्कल्पः विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत् सर्वं मन एव'[१८]। एवं चाद्वैतनयेऽहमर्थ अनात्मा। तद्गता एव हर्षशोकभयक्रोधज्ञानादयो धर्माः। आत्मा पुनः निर्गुणः निराकारः चैतन्यरूपोऽवतिष्ठते। तदुक्तम्-

'सिद्धान्ते ज्ञानेच्छासुखादीनामन्तःकरणाश्रयत्वाभ्युपगमात्। कामसङ्कल्पादीन् प्रकृत्य ''सर्वं मन एव'' (बृ. १.५.३) इति श्रुतेः।'[१९],

श्रीमद्भागवते ब्राह्मपुराणे च हर्षशोकादयो गुणाः मनसः विकारभूताः नात्मगुणा इति निरूपितम्। अनेनाप्यात्मा निर्गुण इति स्फुटं विज्ञायते।

भागवते च आत्माहमर्थयोः भेदं स्वीकृत्य हर्षादीनामहङ्कारधर्मत्वं प्रतिपाद्यात्मधर्मत्वं निषिद्धम्-

''हर्षशोकभयक्रोधलोभमोहस्पृहादयः।
अहङ्कारस्य चैवैते जन्म मृत्युश्च नाऽत्मनः॥''[२०]

कर्तृत्वस्य चात्मधर्मत्वं ब्राह्मपुराणे निषिद्धम्-

''कुर्वन्त्यचेतनाः कर्मदेहेन्द्रियगणाः सदा।
चैतन्यतदधिष्ठाता शान्तात्मा न करोत्यसौ॥''[२१]

## अहमर्थ अनात्मा

अद्वैतनयेऽहमिति प्रतीतिविषयः नाऽऽत्मा। किन्तु चिदचित्संवलनात्मकोऽहङ्कारः। अविद्यापरिणामभूतमन्तःकरणमेव 'मनः' 'बुद्धिः' इति व्यवह्रियते। सुषुप्तावविद्याऽऽन्तःकरणरूपेण न परिणमते। अपि तु मूलरूपेणावतिष्ठते। तदुक्तम्-

'सवासनान्तःकरणस्य कारणात्मनाऽवस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था। न किञ्चिदवेदिषमिति कारणमात्रोपलम्भः सुषुप्तिः'[२२]

सुषुप्तौ साक्षी विद्यते। अहमर्थस्तु नास्ति। अविद्यारूपेणावतिष्ठते। अत एवान्तःकरणपरिणामभूताः ज्ञानसुखादयो धर्माः सुषुप्तौ न विद्यन्ते। अहमर्थस्तु स्वविकारज्ञानादिभिस्साकं प्रतीयते। सुषुप्तौ आत्मा (साक्षी) विद्यते। स्वकार्यसहितोऽहङ्कारः नास्ति। अत एवाऽत्माहङ्कारौ भिन्नौ। अहङ्कारस्यात्मत्वे दुःखादेरत्यन्तोच्छेदासम्भवेन मुक्त्यर्थिप्रवृत्त्यनुपपत्तेः। तथा हि- कार्यस्य हि परिणाम्युपादानमेव स्वरूपमिति तदुच्छेदाद् ऋते न तस्यात्यन्तिकोच्छेदः। प्रकृते उपादानं चाहङ्कारः। आत्मैवोपादानं चेत्, तदुच्छेदे सति कस्य पुरुषार्थः (मोक्षः) स्यात्। अनुच्छेदे च न दुःखादेरात्यन्तिकोच्छेदः स्यात्। किञ्च सुषुप्तौ 'स्वमपीतो भवति' इति भगवती श्रुतिरहङ्कारस्य विलयं श्रावयति। अतोऽपि तस्यानात्मत्वम्। यद्यहङ्कारः सुषुप्तावप्यस्ति (जागर्ति) तर्हि जाग्रत्काल इव अहमित्यनुभवः स्यात्। ततस्तदनुपलम्भादभाव एव विज्ञेयः। तदुक्तम्-

'स्वमपीतो भवतीति स्वापेऽहङ्कारस्य विलयश्रवणाच्च तस्यानात्मत्वम्। अहङ्कारस्य सुषुप्तावनाशे जाग्रतीवाहमित्यनुभवः स्यात्। जाग्रति क्लृप्तप्रमाणस्य साक्षिणस्तत्रापि सत्त्वात्। अतोऽनुलम्भात्तदभाव एव।'[२३]

वस्तुतस्तु 'स्वमपीतो भवति' इति वचनं स्वापे जीवस्य ब्रह्मणि लयं निरूपयति। न च जीवस्य स्वरूपेण लयः सम्भवति। अतस्तदुपाधिभूताहङ्कारविलयादेव तद्विलय उपपादनीयः। 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'[२४] इत्यादिश्रुतेः साक्षी पुनर्विज्ञानरूपोऽवतिष्ठते। अत्रैवं प्रश्नः स्वारसिकः। यद्यहंप्रत्ययो नात्मविषयकोऽपि त्वन्तःकरणविषयकस्तर्हि सुप्तौ अहङ्कारस्याविद्यायां विलीनत्वेन 'एतावन्तं कालमहं सुखमस्वाप्सम्'

इति सौषुप्तिकानुस्मृतिः कथमुपपाद्यत इति । अत्र ब्रूमः । अविद्या हि प्रलये मूलरूपेणावतिष्ठते । तदा तस्याः न काऽपि वृत्तिरस्ति । सुषुप्तौ तु साक्ष्याकारं सुखाकारं चाविद्याया वृत्त्यन्तरं कल्पनीयम् । अनेनैव सुषुप्त्युत्तरकालीना स्मृतिरुपपद्यते । कारणमात्रोपलम्भः सुषुप्तिरिति हि सुषुप्तिशब्दार्थः । तदा कारणस्याज्ञानस्य य उपलम्भः स साक्षिरूप एव । जाग्रत्कालीनोपलम्भो हि मनोवृत्तिरूपः । स्वप्नकालीनस्त्वविद्याकल्पित-मनोवृत्तिरूपः । सुषुप्तिकालीनस्तु न कथञ्चन मनोवृत्तिरूपस्त्वपि तु साक्षिरूप एव । सौषुप्तिकानुभवेऽविद्याया वृत्तित्रयमस्ति- अहमंशः, सुखांशः, अज्ञानांश इति । तत्राहमंशस्य सवृत्तिकान्तःकरणविशिष्ट-स्याविद्यायां विलीनत्वेनानुसन्धानविषयत्वं नास्ति । तथा चात्राहङ्कारः न स्मरणविषयतया प्रतीयतेऽपि तु तदाश्रयतया । वस्तुतस्त्वहङ्कारः न स्मरणाश्रयः भवितुमर्हति ; किन्तु साक्षिचैतन्यमेव । अनुभवितुरेव ह्यनुसन्धातृत्वम् । अनुभवितृ चात्र साक्षिचैतन्यं नाहङ्कारः । तस्य सुषुप्त्यवच्छेदेन विलीनत्वात् । अहङ्कारस्तूत्थानसमय एवानुभूयते । सुषुप्तावननुभूतत्वेन तत्स्मरणायोगात् । यद्यपि साक्षिचैतन्यमेव सर्वत्र स्मरणाश्रयम् । तथाऽध्यस्ताहङ्कारमेव साक्षिचैतन्यं स्मरणाश्रयं भवतीति स्मरणाहङ्कारयोरेकत्र साक्षिचैतन्ये सामानाधिकरण्येनाहङ्कारस्य स्मरणा-श्रयत्वेन प्रतीतिरुपपादयितुं शक्या । एवं चाहङ्कारस्य वस्तुतः स्मरणा-श्रयत्वाभावेऽपि न दोषः । अत्रैकं निदर्शनं निरूपयामः- यथाऽध्यस्तस्य लौहित्यस्य प्रतिबिम्बस्य चाश्रयीभूतो दर्पणो न तु प्रतिबिम्बं लौहित्या-श्रयम् । तथाऽपि लौहित्यप्रतिबिम्बयोरेकत्र दर्पणे सामानाधिकरण्येन लौहित्याश्रयतया मुखस्य प्रतीतिर्जायते तथैवेह स्मरणस्याहङ्कारस्य चाश्रयीभूतं साक्षिचैतन्यमिति स्मरणाहङ्कारयोरेकत्र साक्षिचैतन्ये सामानाधिकरण्येन स्मरणाश्रयतयाऽहङ्कारस्य प्रतीतिर्जायते । साक्षिचैतन्यं

पुनः सुषुप्तावनुभूतान् सुखादीनहङ्काराश्रयत्वेन स्मरतीति सर्वमनवद्यम् । तदुक्तम्-

'अहङ्कारस्तूत्थानसमय एवानुभूयते । सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात् स्मरणानुपपत्तेः । मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन रक्तं मुखमिति प्रतीतिवदहङ्काराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वादहं सुखमस्वाप्समिति सामानाधिकरण्यप्रतीतिः ।'[२५]

पञ्चपादिकायाम् अविद्याहङ्कारयोः स्वरूपं स्फुटं प्रतिपादितम् । श्रुतिस्मृतिष्वनाद्यविद्या बहुषु स्थलेषु निरूपिता । महाप्रलयेऽपि नामरूपयोर्बीजरूपेण सत्वात् 'नामरूप' इत्यविद्या व्यवहृता । अविद्यायां सर्वस्य विलीनत्वेन 'अव्याकृतम्' इति च व्यपदिश्यते । वेदान्तजन्यविज्ञाननाश्यत्वाद् 'अविद्या' इति च नाम सूपपन्नम् । अनुपपन्नप्रमेयप्रतिपादकत्वात् 'माया' इत्यपि शब्द्यते । चित्रविचित्रपरिणामशक्तिमत्त्वाद् 'प्रकृतिः' इत्यपि गीयते । आच्छादकत्वाद् 'अग्रहणम्' इत्युच्यते । प्रमाणैः युक्तिभिश्च निरूपयितुमशक्यत्वाद् 'अव्यक्तम्' इति च कथ्यते । एवमनेकविधानि नामानि अविद्याया सन्ति । चैतन्यस्यानाद्यविद्यासम्बन्धेन प्रतिबिम्बरूपतया जीवः प्रतिभाति । इयं चाविद्या भ्रम-पुण्यपापरूपकर्मस्मरणसंस्कारचित्राणां भित्तिरिव प्रतीयते । अनादिरनिर्वाच्या च । सुषुप्तौ चाविद्या संस्काररूपेणावतिष्ठते । जगदुपादानकारणीभूताया अविद्यायाः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषः विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसञ्जातज्योतिः स्वयं प्रकाशमानोऽपरोक्षोऽहङ्कारः । अहङ्कारतत्वे क्रियाशक्तिविज्ञानशक्ती विद्येते । क्रियाशक्त्या कर्तृत्वम्, विज्ञानशक्त्या च भोक्तृत्वमात्मनः प्रतीयते । अहङ्कारगतविज्ञानशक्तिरेव 'अन्तःकरणम्' 'मनः' 'बुद्धिः' इति

व्यवह्रियते । अहंपदवाच्यं तु कर्तृत्वभोक्तृत्वाद्याश्रयमहङ्कारतत्त्वम् । अहङ्कारस्यापरोक्षत्वाभावेऽपि चेतनसम्बन्धात् प्रत्यक्षत्वव्यवहार उपपद्यते । अहङ्कारसम्बन्धादेव तद्गताः कर्तृत्वभोक्तृत्वादयो धर्मा आत्मनि प्रतीयन्ते । वस्तुतस्त्वात्मा न कर्ता नापि भोक्ता । सर्वमेतत् पञ्चपादिकायां व्यक्तम् ।

'योऽयं श्रुतिस्मृतीतिहासपुराणेषु ...... स्फटिकमणेरिव उपधाननिमित्तो लोहिमा ।'[२६]

## उपनिषदामैदम्पर्यम्

समेषामपि वेदानां शास्त्राणां च ब्रह्मैक्यबोधन एव तात्पर्यम् । यद्यपि जीवः न ब्रह्मणा भिद्यते । तथापि भिन्न इव प्रतीयते । वस्तुतस्तु विचार्यमाणे नाद्वैतदर्शने जीवब्रह्माणावङ्गीकृत्य तयोरभेदः प्रतिपाद्यते । किन्तु ब्रह्मव्यतिरेकेण जीवस्य सत्ता प्रतिषिध्यते । न हि विरुद्धधर्माधिकरणयोर्द्वयोरभेदः दृष्टचरः । एष एवार्थ अवच्छेदवादप्रतिबिम्बवाद-आभासवादव्याजेन निरूपितः । तदुक्तम्- 'न हि नित्यमुक्तस्वरूपात् सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयः वेदान्तार्थनिरूपणायामुपलभ्यते ।'[२७] इति ।

## ब्रह्म

'नेति नेति'[२८] इति ब्रह्मस्वरूपं बोधयन्ती श्रुतिः मनोवाचामगोचरं निर्गुणं निराकारम् 'अशब्दमस्पर्शमरूपमव्ययम्'[२९] इत्यादिश्रुत्युक्तदिशाऽपास्तसमस्तविशेषमेव ब्रह्म प्रतिपादयति । ब्रह्मणि च शब्दप्रवृत्तिहेतूनां गुणक्रियादीनामभावात् ब्रह्मावाच्यमुच्यते । तदुक्तम्-

**'षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ।**
**नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥'**[३०]

**'ब्रह्मण्यवाच्ये यो विद्वान् वाच्यतामधिगच्छति ।**
**स निस्त्रप्रो निमित्तानां विरहैः प्रतिबोध्यताम् ॥'**[३१]

अवाच्यमपीदं ब्रह्म शब्दैर्लक्ष्यत इति वेदान्तस्यास्ति सार्थक्यम्। सर्वे वेदान्ताः ब्रह्मावसानोऽयं प्रपञ्च इति प्रतिपादयन्तः तदतिरिक्तस्य मिथ्यात्वं व्याचक्षते। परिशिनष्टि च ब्रह्मैवेति न विस्मर्तव्यम्। येषां पुनः साधकानाम् आदावेव निर्गुणे ब्रह्मणि न मनो रज्यते तेषामेकाग्रतासौविध्यार्थं सगुणं निर्गुणं चेति द्विरूपं ब्रह्म श्रुतौ प्रतिपादितमस्ति। उपासनासौकर्यार्थमेव सगुणस्य निरूपणम्, न पुनस्तस्य पारमार्थिकत्वं वेदितव्यम्। तदुक्तम्-

'निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्रतत्रोपदिश्यत इत्येतदप्युक्तमेव। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते, शालग्राम इव विष्णोः'[३२]

**'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥'**[३३]

वैराग्यादिसाधनैः गुरूपदिष्टैक्यतत्त्वज्ञानाच्च 'दशमस्त्वमसि' इति वाक्योक्तदिशा निर्विशेषचिन्मात्रज्ञानं यदा प्रजायते तदा स्वत एव निवृत्तमेव सर्वमिदं त्रैकालिकासदिति प्रज्ञायते। यद्यपि तत्त्वज्ञानोदयानन्तरमेव न किञ्चनावतिष्ठत इति विज्ञाने जातेऽपि संस्कारवशान्मिथ्याज्ञानं द्विचन्द्रज्ञानवत् कञ्चित्कालमनुवर्तत एव। इयमेव जीवन्मुक्त्यवस्थेति कथ्यते। अविद्यायां निवृत्तायां मुक्त इति व्यवहारः। तदुक्तम्- 'तस्मादविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति चावो-चामः। यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्तिः।'[३४]

**जीवः**

अद्वैतनये न जीवो ब्रह्मणा भिद्यते। किन्तु तदनन्य एव। तदनन्यत्वं च तद्व्यतिरेकेणाभावः। परमार्थतया विचार्यमाणे जीवो नाम धातुः नास्त्येवेति अद्वैतराद्धान्तः। चैतन्यातिरेकेण जीवाभावोऽवच्छेदवाद-

प्रतिबिम्बवाद-आभासवादभेदेन त्रिधा निरूपितः। सर्वेषामेतेषां मतानां जीवस्य कल्पितत्व एव तात्पर्यम्। यदा वेदान्ताध्ययनेन गुरूपदेशेन चाद्वितीयोऽहं चेतन इति तत्त्वसाक्षात्कारो भवति, तदाऽविद्यमानमेव सर्वमविद्यमानमिति दृढं प्रतीयते। न हि वेदान्ता अविद्यमानं किमपि साधयन्ति, अपि तु विस्मृतं स्वस्वरूपं प्रज्ञापयन्ति केवलम्। तदुक्तम्-

**'राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।**
**तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥'**[३५]

व्याधेषु संवर्धितः राजपुत्रः व्याधमेवात्मानं मनुते। विदिततत्त्वस्य कस्यचन सुहृदः बोधनेन स्वस्मिन् विद्यमानमेव राजपुत्रत्वमनुभवति। एतदेव निजं रूपम्। आविद्यकं व्याधत्वम्। तद्वत् तत्त्वमसीति वाक्यात् जीवः स्वात्मानं निरवच्छिन्नं चेतनं मनुते। एवं चाविद्यानिवृत्त्यर्थं शास्त्रप्रवृत्तिः, नाविद्यमानं प्रापयितुम्।

## मुक्तिः, मुक्तिसाधनानि च

शारीरकसूत्र-भगवद्गीतादिषूपनिषत्सु प्रतिपादितरीत्या दृष्टादृष्टभोगेषु दोषदर्शनेन वैराग्यं सम्पादनीयम्। सम्पादनीयं च विज्ञानम्। निष्काम-कर्मभक्तिविरक्त्यादिसाधनैरविद्याया अनादिभूताया हानं सम्पादनीयम्। एभिरुपायैर्विज्ञाततत्त्वस्य यदा अविद्यायाः निवृत्तिर्भवति सैव मुक्ति-रित्युच्यते। तदुक्तम्- 'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः।'[३६] उक्तं मुण्डकभाष्येऽपि- 'न च परप्राप्तेरवगमार्थस्य च भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम्।'[३७]

एवमद्वैतदर्शनं ब्रह्मसत्यत्वं प्रतिपादयत् अवैदिकजैनबौद्धादिदर्शन-प्रतिषेधपरं च विराजत इति निश्चप्रचम्।

---

## पादटिप्पण्यः

१. ब्रह्मज्ञानावलीमाला
२. बृहादरण्यकोपनिषद् २.५.१९
३. बृहादरण्यकोपनिषद् १.४.११०
४. छान्दोग्योपनिषद् ६.३.१०
५. ऐतरेयोपनिषद् ५.३
६. छान्दोग्योपनिषद् ६.१.४
७. ब्रह्मसूत्राणि २.१.१५
८. ब्रह्मसूत्रभाष्यम् (शाङ्करम्) २.१.१४, पृ. १९७
९. ब्रह्मसूत्रभाष्यम् (शाङ्करम्)२.१.१४, पृ. १९८
१०. वेदान्तपरिभाषा पृ.३
११. वेदान्तपरिभाषा पृ. ३
१२. वेदान्तपरिभाषा पृ. ४१
१३. वेदान्तपरिभाषा पृ. ४१
१४. वेदान्तपरिभाषा पृ.४१
१५. प्रमाणलक्षण-श्रीनिवासतीर्थीयटिप्पणी, पृ. १९८
१६. न्यायामृत-श्रीश्रीनिवासतीर्थीयटिप्पण्यामुल्लिखितम्
१७. वेदान्तपरिभाषा पृ. २४-४३
१८. बृहादरण्यकोपनिषद् १.५.३
१९. सिद्धान्तबिन्दुः पृ. १६, अ.वा.शा.
२०. भागवतम् ११.२८.१६
२१. सिद्धान्तबिन्दावुल्लिखितं ब्रह्मपुराणवचनम्, पृ. १६
२२. सिद्धान्तबिन्दुः पृ. ११९
२३. वेदान्ततत्त्वविवेकः पृ. २११
२४. बृहादरण्यकोपनिषद् ४.३.२३
२५. सिद्धान्तबिन्दुः पृ. १२३
२६. पञ्चपादिका पृ. ९८-१००

२७. ब्रह्मसूत्रभाष्यम् (शाङ्करम्) २.३.३०
२८. बृहादरण्यकोपनिषद् ३.९.२६
२९. कठोपनिषद् २८.३.१५
३०. नैष्कर्म्यसिद्धिः ३.१०३
३१. अद्वैतसिद्धि २
३२.ब्रह्मसूत्रभाष्यम् (शाङ्करम्) १.२.१४
३३. वेदान्तकल्पलता १.१.२०
३४. बृहदारण्यकभाष्यम् ४.४.६
३५. बृहदारण्यभाष्यवार्तिकम् अ.१,ब्रा.१, मं.३३
३६. ब्रह्मसिद्धिः. पृ. ४६
३७. मुण्डकभाष्यम् १.५

**परामृष्टग्रन्थसूची**

**१. ब्रह्मज्ञानावलीमाला**
श्रीशङ्कराचार्याः, वाणीविलासमुद्रणालयः, श्रीरङ्गम्

**२. बृहादरण्यकोपनिषद्भाष्यम्**
श्रीशङ्कराचार्याः, मोतिलाल्बनारसिदासमुद्रणालयः, वारणासी, १९२८

**३. छान्दोग्योपनिषद्भाष्यम्**
श्रीशङ्कराचार्याः, मोतिलाल्बनारसिदासमुद्रणालयः, वारणासी, १९२८

**४. ऐतरेयोपनिषद्भाष्यम्**
श्रीशङ्कराचार्याः, मोतिलाल्बनारसिदासमुद्रणालयः, वारणासी, १९२८

**५. ब्रह्मसूत्रभाष्यम् (शाङ्करम्)**
श्रीशङ्कराचार्याः, सं.- कामकोटिचन्द्रशेखरेन्द्रसरस्वतीसंयमिनः, कामकोटिकोशस्थानम्, मद्रास्, १९५४

**६. वेदान्तपरिभाषा**
धर्मराजाध्वरीन्द्रः, सं- स्वामी गोविन्दसिंहः, खेमराजकृष्णदासप्रकाशनम्, मुम्बयी, १९९८

**७. प्रमाणलक्षण-श्रीनिवासतीर्थीयटिप्पणी**

सं- पि.पि. लक्ष्मीनारायणोपाध्यायाः, माध्वराद्धान्तसंवर्धकसभा, धर्मप्रकाशमुद्रणालयः, मद्रास्

**७. न्यायामृत-श्रीश्रीनिवासतीर्थीयटिप्पणी**

सं- ए. हरिदासभट्टः, पूर्णप्रज्ञविद्यापीम्, बेङ्गलूरु

**८. सिद्धान्तबिन्दुः**

मधुसूदनसरस्वती, भण्डार्कर् शोधसंस्थानम्, पुणे, १९८६

**९. श्रीमद्भागवतम्**

पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु, २०१२

**१०. वेदान्ततत्त्वविवेकः**

श्रीनृसिंहाश्रममुनिः, सं- नारायणस्वामी शास्त्री, प्राच्यविद्यासंशोधनालयः मैसूरु, १९५५

**११. पञ्चपादिका**

पद्मपादाचार्याः, सं- रामानुजताताचार्यः, केन्द्रियसंस्कृतविद्यापीठम्, तिरुपति, १९८५

**१२. कठोपनिषद्भाष्यम्**

श्रीशङ्कराचार्याः, मोतिलाल्बनारसिदासमुद्रणालयः, वारणासी, १९२८

**१३. नैष्कर्म्यसिद्धिः**

सुरेश्वराचार्याः, मुम्बयीसंस्कृत तथा प्राकृत सीरिज्, मुम्बयी १९२५

**१४. अद्वैतसिद्धिः**

मधुसूदनसरस्वती, निर्णयसागरमुद्रणालयः, मुम्बयी, १९१७

**१५. ब्रह्मसिद्धिः.**

मण्डनमिश्रः, प्राच्यविद्यासंशोधनालयः, मद्रास्, १९३७

**१६. मुण्डकभाष्यम्**

श्रीशङ्कराचार्याः, मोतिलाल्बनारसिदासमुद्रणालयः, वारणासी, १९२८

# विशिष्टाद्वैतदर्शनम्

डा. ए.वि. नागसम्पिगे
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्,
पूर्णप्रज्ञविद्यापीठम्, बेङ्गळूरु.

## आचार्यपरम्परा

विष्णुपारम्यप्रतिपादकेषु भारतीयदर्शनेषु विशिष्टमिदं भगवद्रामानुजदर्शनम्। भगवद्रामानुजाचार्यसिद्धान्तस्य वेदोपनिषदः आळ्वार्प्रबन्धाश्च आकरभूता व्यपदिश्यन्ते । भगवद्बोधायनटङ्कद्रमिडगुहदेवप्रभृतिभिः प्राचीनाचार्यैः प्रवर्तितोऽयं सिद्धान्तो भगवद्रामानुजाचार्यैः विशदीकृतः । तदुक्तम्- 'भगवद्बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचि-प्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थश्रुति-निकरनिदर्शितोऽयं पन्थाः ।'[१] इति, 'भगवद्बोधायनकृतां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः । अतस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।'[२] इति च ।

## विशिष्टाद्वैतम्

अस्य पदस्येदं वैशिष्ट्यमस्ति- अस्मिन् सिद्धान्ते श्रुत्युक्तदिशा भेदाभेदावुभावप्यभ्युपेयेते । यद्यप्यद्वैतं पराकुर्वन्तोऽपि दार्शनिका अद्वैतपदमत्र संयोजयामासुः । अत्रेदं निदानं समासां श्रुतीनां स्वास्थ्य-संरक्षणं प्रामाण्यसंरक्षणं च । अनन्तकल्याणगुणपरिपूर्णं ब्रह्माद्वैतम् । अस्य तु विशेषणानि भवन्ति जीवा अनन्ता जडपदार्थाश्च । जीवेषु जडेषु च परस्परं भेदसद्भावेऽपि (विशेषणेषु भेदसद्भावेऽपि) विशिष्टं पुनर्ब्रह्मैकमेव । एतमेवार्थं विशिष्टाद्वैतदर्शनमिति शब्दः प्रतिपादयति ।

क्वापि श्रुतिषु विरोधगन्धः नास्ति । एकवाक्यतैव द्रष्टव्या । यथा 'अविक्रियमाणमव्यपदेश्यम्'[३] इत्यादौ ब्रह्मणि मूलरूपे विकाराभावः प्रतिपादितः । 'केवलो निर्गुणश्च'[४] इत्यादौ विकारकारणीभूतगुण-राहित्यमप्युक्तम् । 'एकमेवाद्वितीयं ब्रह्म'[५] इति भगवतः प्रपञ्चस्य च शरीरशरीरिभावमाश्रित्याभेद उपपादितः । 'तत्त्वमसि'[६] इत्यादि-श्रुतयोऽपि शेषशेषिभावं प्रकार-प्रकारिभावं वा प्रतिपादयन्त्य अद्वैतं व्याचक्षते । एवमेव कार्यकारणभावश्रुतीनामपि ऐदम्पर्यमवधेयम् । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमुच्यते तदेव हि स्थूलचिदचिद्विशिष्टं कार्यमुच्यते । एवं च ब्रह्मण उपादानत्वप्रतिपादिका श्रुतय अवस्था-विशेषमाश्रित्य उपादानोपादेयभावं ब्रह्मजगतोर्व्याचक्षते । 'अवस्थान्तर-योगित्वमिह उपादानत्वम्' पारिभाषिकं विवक्षितम् । ब्रह्मण निमित्त-कारणत्वं सर्वसम्मतमेव । एवं चोपादानत्वं निमित्तत्वं चैकस्मिन्नेव ब्रह्मणि यथा समन्वितं भवेत् तथेह व्याख्यानं विहितमिति सिद्धान्तस्य परं वैशिष्ट्यमिति विज्ञेयम् ।

**सिद्धान्तसारः**

तत्त्वज्ञानार्थं भगवद्रामानुजाचार्यैः यदा काञ्चीस्थः वरदराजः प्रसादितः, तदा काञ्चीपूर्णमहाभागव्याजेन तत्त्वरहस्यमाविश्चकारेति सम्प्रदायविदः व्याचक्षते । तदुक्तम्-

**'अहमेव परं तत्त्वं जगत्कारणकारणम् ।**
**क्षेत्रज्ञेश्वरयोर्भेदः सिद्ध एव महामते ॥**
**मोक्षोपायो न्यास एव जनानां मुक्तिमिच्छताम् ।**
**मद्भक्तानां जनानां च नान्तिमस्मृतिरिष्यते ॥**
**देहावसाने भक्तानां ददामि परमं पदम् ।**
**पूर्णाचार्यमहात्मानं समाश्रय गुणाश्रम् ॥'**[७]

अयमाशयः-१. अनन्तकल्याणगुणपरिपूर्णं ब्रह्मैव परमं प्रधानं तत्त्वम्। २.जीवेश्वरयोः प्रतीयमानो भेदः प्रमाणत्रयावसितः। अत एव प्रामाणिकः। ३. प्रपत्तिरेव मुक्तिसाधिका। ४. प्रपत्तिमार्गावलम्बिनां भक्तानां नान्ते नारायणस्मृतिरिष्यते। ५. यस्मिन् जन्मनि तैलधारावदविच्छिन्नस्मृति-सन्ततिर्जायते, तस्मिन्नेव जन्मनि भौतिकदेहावसाने प्रपत्तिमार्गावलम्बिनो मुक्तिर्भवति। ६. तात्त्विकसंशयार्थं महात्मानं काञ्चिपूर्णं समाश्रय। त्रिसहस्रवत्सरेभ्यः प्राक् विद्यमानैः द्वादशसङ्ख्याकैः तमिळुभाषायां प्रबन्धनिर्मातृभिः, एवं साधकपुरुषैः यामुनाचार्य-यादवप्रकाश-रामानुजाचार्य-वात्स्य-वरदाचार्य-सुदर्शनभट्ट-वेङ्कटनाथ-महाचार्य-रङ्गरामानुज-वाधूलश्रीनिवासाचार्यप्रभृतिभिः संस्कृतभाषानिबद्धप्रबन्धैः नैकैर्विद्वन्मूर्धन्यैः प्रवर्धितोऽयं सिद्धान्तः।

## प्रमाणानि

'प्रमाकरणं प्रमाणम्'[८] इति व्याचक्षाणैः यतीन्द्रमतदीपिकाकारैः प्रत्यक्षानुमानशब्दाश्चेति त्रीणि प्रमाणानि प्रतिपादितानि। 'साक्षात्कारि-प्रमाकरणं प्रत्यक्षम्'[९] इति प्रत्यक्षलक्षणम्। तज्जन्यं ज्ञानमपि प्रत्यक्षमुच्यते। साक्षात्कारित्वादेव तत् स्वतः प्रमाणम्। इदं ज्ञानं सविकल्पक-निर्विकल्पक-भेदेन द्विविधम्। ज्ञानोत्पत्तिक्रमस्तु नैयायिकवदङ्गीक्रियते। स्मृति-प्रत्यभिज्ञयोः प्रत्यक्षेऽन्तर्भाव इष्यते। तत्त्वमसि, दशमस्त्वमसीत्यादौ न शाब्दापरोक्षः। धर्मवान् त्वमसीत्यादौ अतिप्रसङ्गात्। सर्वं ज्ञानमपि यथार्थमेवेति पन्थाः। पञ्चीकरणश्रुत्या सर्वत्रापि सर्वस्य विद्यमानत्वेन शुक्तावपि रजतांशः विद्यत एव। बहूनां शुक्त्यंशानामग्रहणात् रजतांशा-नामल्पीयसां ग्रहणाच्च भ्रमत्वव्यवहारः। बह्वंशग्रहणादेव बाधव्य-वहारश्चोपपद्यते।

एवमनुमितिकरणमनुमानम् । तच्च व्याप्यत्वज्ञानम् । अविनाभावो व्याप्तिः । नास्माभिः परामर्श इष्यते । अन्वयव्यतिरकिभेदेन व्याप्तिर्द्विधा । अनुमितौ सर्वत्रापि पञ्चावयवा नेष्यन्ते । अनाप्तानुक्तवाक्यं प्रमाणशब्दः । अन्यशब्दोऽप्रमाणम् । नित्यापौरुषेयवेदसङ्ग्रहार्थं नञ्द्वयम् । वेदानां कार्यपरत्वेन सिद्धब्रह्मस्वरूपप्रतिपादकत्वेन च प्रामाण्यमिष्यते । सर्वेषां शब्दानां शरीर-शरीरिभावन्यायेन ब्रह्मणि प्रवृत्तिरङ्गीक्रियते । अनेन न्यायेन ब्रह्म सर्वशब्दवाच्यम् । तदुक्तं वेङ्कटनाथदेशिकाचार्यैः-

**'प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा**
**प्रत्यक्षं तत्र साक्षात्प्रतिपदनुमितिः व्यापृतो व्यापके धीः ।**
**शाब्दी वाचार्थबुद्धिः स्मृतिरपि कथिता संस्क्रियामात्रजा सा**
**येषामिष्टान्यथाधीः पृथगभिदधिरे तैरिहान्येऽपि भेदाः ।।'**[१०] इति ।

**द्रव्यनिरूपणम्**

१. ईश्वरः, २. जीवः, ३. नित्यविभूतिः, ४. ज्ञानम्, ५. प्रकृतिः, ६. कालः - इति षड् द्रव्याणि ।

**१. परं ब्रह्म-** नारायणः जगज्जन्मादिकारणतया श्रुतिस्मृतिषु प्रतिपादितः । स्वरूपतः धर्मभूतज्ञानतः विग्रहतश्च व्यापकत्वाद् विभुः । परव्यूहविभवान्तर्याम्यर्चावताररूपेण स पञ्चविधः । परस्तु त्रिपाद् विभूतौ वैकुण्ठे । स एव मूलरूपी नारायणः । वासुदेवसङ्कर्षणादिचतू रूपाणि व्यूहरूपाणि । विभवस्तु तत्सजातीयावतारः । अन्तर्यामी तु सर्वेषां जीवानां हृदयदेशवर्ती । अर्चावतारस्तु अर्चकाभिमतार्चादिशरीरं स्वीकृत्य अर्चकपराधीनस्नानादिव्यापारवान् भवति । स सर्वदा लक्ष्मीसमेत एव । ईश्वरत्वं व्यासज्यवृत्तिधर्मः ।

**२. जीवः -** देहेन्द्रियादिविलक्षणोऽणुश्चेतनः जीव उच्यते । तदुक्तम्-

'अणुत्वे सति चैतन्यं जीवलक्षणमुच्यते ।
स च देहेन्द्रियादिभ्यो विलक्षणतया मतः ॥'[११]

जीवाः परतन्त्रा अणवः भगवतः शेषभूताः प्रतिशरीरं भिन्नाश्च । बद्ध-नित्य-मुक्तभेदेन त्रिविधाः । भौतिकलिङ्गशरीरादिबद्धत्वात् 'बद्धाः' उच्यन्ते । संसारमतीताः 'मुक्ताः' उच्यन्ते । गरुडशेषविष्वक्सेनादयः नित्यमुक्ता असङ्ख्याश्च जीवाः 'नित्याः' उच्यन्ते । तदुक्तम्- 'आत्मस्वरूपं च बद्धमुक्तनित्यभेदेन त्रिविधम् । संसारिणः बद्धा उच्यन्ते । मुक्ताः निवृत्तसंसाराः । कदाऽपि संसारमप्राप्ताः नित्या इत्युच्यन्ते शेषगरुडादयः ।'[१२]

असङ्ख्याः नित्यमुक्ताः सन्तीत्यत्र 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः'[१३] इति भगवती श्रुतिर्नः प्रमाणम् । यद्यपि संसारनिवृत्त्यनन्तरं मुक्तौ सर्वे जीवा अनन्तकालपर्यन्तं मङ्गलमङ्गलमप्राकृतविग्रहं परमात्मानं पश्यन्तीति 'सदा पश्यन्ति सूरयः' इति श्रुत्यर्थ उपपादयितुं शक्यते । तथापि 'सदा'पदस्य निरङ्कुशवैशिष्ट्यम् अनेकेषां नित्यसूरिणामङ्गीकार एव सुष्ठूपपन्नं भवति । मुक्त्यनन्तरं परमात्मानं पश्यन्तोऽपि प्राङ् न पश्यन्तीति 'सदा पश्यन्ति सूरयः' इति निरूपितं सार्वकालिकदर्शनं संसारिषु व्याहन्यते । अनेन च नित्यमुक्ता अत्र अभिमता इति विज्ञायते । तदुक्तम्-

**'अन्ये चानादिशुद्धाः श्रुतिसमधिगताः सूरयः सन्त्यसङ्ख्याः**
**कर्माभावादनादेर्न तु भवति कदाऽप्येषु संसारबन्धः ।**
**शेषाणां शेषिनश्च स्फुरति सुखतया सर्वदा सर्वतत्त्वे**
**नित्यानां मुक्तिभाजामपि भुवनकृता भोगमात्रं समानम् ॥'**[१४]

आनन्दादिगुणस्वरूपत्वं सर्वेषां जीवानां समानम् । सर्वे मुक्तियोग्याः ।

धर्मभूतज्ञानस्य स्वप्रकाशत्वेन नित्यत्वेन च समेषां जीवानां तद्वितिभूते आनन्दे तारतम्यं मुक्तौ नोपेयते । संसारावस्थायामेव देव-ऋष्यादिभेदेन प्रतीयमानः योग्यताभेद औपाधिकः । मुक्तौ तु सर्वेषां स्वरूपं समानम् ।

३. **नित्यविभूतिः**-निश्शेषाविद्यानिवृत्तिदेशः शुद्धसत्त्ववती नित्यविभूतिः। सा पुनर्नित्या अप्राकृतशुद्धसत्त्वात्मिका च । ईश्वरस्य मुक्तानां नित्यानां च भोग्यभोगस्थानभोगोपकरणवती ।

४. **ज्ञानम्-** ज्ञानं प्रभावत् स्वप्रकाशम् । ईश्वरस्य नित्यजीवानां चाति-रोहितम् । बद्धानां तिरोहितम् । सर्वा इयं संवित् स्वत एव प्रमाणम् ।

प्रायः सर्वेष्वपि दर्शनेषु ज्ञानद्वैविध्यमङ्गीकृतमस्ति । एकं स्वरूपज्ञानम्, अपरं तु मनःपरिणामभूतम् । विशिष्टाद्वैतनये पुनः स्वरूपज्ञानातिरिक्तं धर्मभूतज्ञानं नित्यं विभु जडं स्वप्रकाशं स्वीकृतमित्यस्त्यत्र महान् विशेषः। धर्मभूतज्ञानमिदं बुद्धिरित्यपि व्यपदिश्यते । अत्र विचारप्रणाली त्वेवमनुसन्धेया- घटादिपदार्थानां सत्त्वे ज्ञानमेव प्रमाणम् । घटं दृष्ट्वा 'अयं घटः' इति प्रत्यक्षात्मकं ज्ञानं जातमिति धिया सर्वे घटस्य सत्त्वमङ्गी-कुर्वते । 'अयं घटः' इत्याकारकं घटं दृष्ट्वा जायमानं ज्ञानं, 'व्यवसायः' इत्युच्यते नैयायिकैः । ज्ञानविषयकं च यद् ज्ञानमस्ति 'घटज्ञानवानहम्' इत्याकारकम् एतद् 'अनुव्यवसायः' इत्युच्यते । यदि ज्ञानस्य सत्त्वं ज्ञानविषयकज्ञानेनानुव्यवसायरूपेण निश्चीयते तर्हि तस्य प्रामाण्यग्राहक-मन्यदन्वेषणीयम् । एवमत्र परम्परयाऽनवस्थाऽपरिहार्या भवति । अतः ज्ञानं स्वप्रकाशकं सत् घटादिविषयं स्वात्मानं स्वप्रामाण्यं च प्रभावद् गृह्णातीत्यङ्गीकरणीयम् । एतदेव हि ज्ञानस्य स्वप्रकाशकत्वं विशिष्टाद्वैत-नयेऽभिमतम् । तदुक्तं तत्त्वमुक्ताकलापे-

'धीत्वाद् वेद्मीति सिद्धा स्वयमितरमतिर्बुद्धिलक्ष्मादिधीवत्
यद्वा सर्वज्ञधीवन्न स मतियुगवान्नापि चैकोनवेदी।
नो चेद्धारामतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात्
स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या॥'[१५]

एवमेव भट्टपराशरैर्बुद्धेः स्वतःसिद्धत्वं प्रपञ्चितम्-

'धियः प्रत्यक्षभावत्वात् परतस्तदसम्भवात्।
पारिशेष्यात् स्वतोभानं प्रमाणाच्च ततस्ततः॥
प्रतीतेर्व्याहरणतः सन्देहपरिवर्जनात्।
सत्तायां सिद्धवत्कारात् ज्ञानं भातीति भावितम्॥
परस्यादर्शनाद् व्याप्तादन्वयिव्यतिरेकितः।
अर्थापत्तेश्च युक्तेश्च वचनाच्च स्वदृङ्गतिः॥'[१६] इति।

सकर्मकावभासत्वं सकर्तृकावभासत्वम् इत्यादिलक्षणान्यपि विज्ञेयानि। न्यायसिद्धाञ्जने त्वेवं लक्षणं निरूपितम्-

'अत्यन्तवेगितात्यन्तसौक्ष्म्यं निर्भरता तथा।
स्वसत्ताकालभाव्याप्तिर्ज्ञाने लक्ष्मचतुष्टयम्॥'[१७] इति।

**प्रमाणानि**

'मानाधीना मेयसिद्धिः' इति न्यायेन बुद्धिस्वरूपविषये प्रमाणानीह निरूप्यन्ते -

'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'[१८]

'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा'[१९]

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा।

तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽत्मनो हि ते ॥'[२०]

**अयमत्र समुदितार्थः**- विज्ञातुर्जीवस्य विज्ञातेः ज्ञानस्य विपरिलोपः विनाशः नास्तीति नित्यं ज्ञानमिह भगवत्या श्रुत्या भणितम्। 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इत्यत्रापि यस्य धर्मस्योच्छित्तिर्विनाशः न विद्यत इति नित्यभूतं ज्ञानमिह विवक्षितम् । 'यथा न क्रियते' इत्यत्रावबोधादयो गुणाः हेयगुणप्रध्वंसात् प्रकाशन्ते न जन्यन्तेऽपि तु नित्या एवेति स्फुटं प्रतिपादितम् । अन्यानि च प्रमाणानि बहून्याकरे द्रष्टव्यानि ।

यद्यपि 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'[२१] इति श्रुतौ सर्वाण्यपि ज्ञानानि अन्तःकरणपरिणामरूपाणि दृश्यन्ते। न च तानि नित्यानि भवितुमर्हन्ति। प्रमाणसिद्धमानसज्ञानातिरिक्तनित्यज्ञानाभ्युपगमे कथं श्रुतिविरोधः परिहृत इति शङ्का जायेत । अत्र ब्रूमः- यद्यपि ज्ञानमेव बाह्यवस्तूनि गृह्णाति, मनः द्वारमात्रम्। 'काष्ठं पचति' इतिवत् करणप्राधान्येन श्रुतौ 'सर्वं मन एव' इति व्यवहृतम्। अनुत्पन्नस्य नित्यस्य ज्ञानस्य श्रुतौ श्रूयमाणत्वेन नित्यं ज्ञानं स्वप्रकाशं विभु जडम् अङ्गीकरणीयमेव । धर्मभूतज्ञानस्य नित्यत्वे ज्ञानमुत्पन्नं नष्टमित्यादिव्यवहारः कथमिति तु शङ्का सङ्कोचविकासाभ्यां परिहरणीया। एवं तर्हि आत्मनो ज्ञानस्य च को भेद इति चेत्, आत्मनि तु धर्मत्रितयं प्रतीयते। धर्मभूतज्ञाने तु द्वितयमिति विशेषः। आत्मन्येकत्वादिविज्ञानात् प्रमातृत्वं, स्वज्ञानेन प्रमेयत्वं, ज्ञानरूपत्वात् प्रमाणत्वमपि विद्यत इति त्रयः धर्माः सन्ति। धर्मभूतज्ञानस्य तु घटादिज्ञानसाधनत्वात् प्रमाणत्वं प्रमेयत्वं चास्ति, प्रमातृत्वं तु नास्ति । नित्यस्य धर्मभूतस्य

ज्ञानस्याङ्गीकारे द्वादशाक्षेपाः न्यायसिद्धाञ्जने परामृष्टाः । सङ्क्षेपेणात्र प्रस्तूयन्ते-

१. बुद्धेर्नित्यत्वे किं प्रमाणम् ?

अत्र तु 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादीनि प्रमाणानि तु प्रागेवाभिहितानि ।

२. ज्ञानस्य नित्यत्वे कथं जागर-स्वप्न-सुषुप्तिभेदः ?

यथा दाहकस्य वह्नेः मण्यादिसमवधानदशायां प्रतिबन्धकसद्भावान्न दाहकत्वम्, तथैव ज्ञानस्यापि प्रकृतिगुणान्तर्गत-तमोरूपप्रतिबन्धक-सत्त्वदशायां सुषुप्तिरुपपद्यते । अव्यवहारस्तु करणोपरतिनिमित्त इति ब्रूमः ।

३. किं च प्रमाणं प्रसरणे ?

इन्द्रियेण सह चैतन्यमपि निःसृत्य तेन तेनार्थेन सन्निकृष्यते । तेन च ज्ञानमुपपद्यते । उक्तं च मनुस्मृतौ-

**'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम् ।**
**तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥'**[२२]

श्रुतिरपि जागर्ति 'प्रज्ञा च तस्मात् प्रसृता पुराणी' इति ।

४. आत्मगुणभूतायाः बुद्धेः कथं द्रव्यत्वम् ?

न वयं तार्किकाणामिव अद्रव्यमेव गुणशब्देन व्यवहरामः । 'यो यदाश्रितस्वभावः स तस्य गुणः' इति गुणलक्षणमुक्तं सिद्धान्ते । द्रव्यात्मकगुणाः केवलगुणाश्चेति गुणेषु द्वैविध्यमभ्युपगतम् । पूर्वे ज्ञानादयः, उत्तरे सत्त्वरजस्तमःप्रभृतयः विवक्षिताः । प्रभाद्रव्यस्य दीपगुणभूतस्येव ज्ञानस्याप्यात्मगुणभूतस्यापि द्रव्यत्वमविरुद्धम् । उक्तं च श्रीभाष्ये-

'यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते, यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथापि तेजोद्रव्यमेव न शौक्ल्यादिवद्गुणः, स्वाश्रयादन्यत्रापि वर्तमानत्वात् रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्। प्रकाशवत्त्वाच्च तेजोद्रव्यमेव'

'अस्य ज्ञानरूपस्यैव, मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धम्'[२३]

बुद्धौ तु 'यो यदाश्रितस्वभावः...' इत्यादिलक्षणोक्तदिशा गुणत्वम्, 'अवस्थाश्रयः द्रव्यम्', 'सङ्कोचविकासवद् द्रव्यम्' इति लक्षणोक्तदिशा द्रव्यत्वमपि सङ्घटत इति विज्ञेयम्।

५. द्रव्यत्वे किं प्रमाणम्?

'बुद्धिः द्रव्यं प्रसरणादिमत्वात् सम्प्रतिपन्नवत्' इत्यनुमानं मानम्। अत्र वरदविष्णुमिश्रवचनमपि उदाहर्तव्यम्- 'ज्ञानं द्रव्यं संयोगादृष्टान्यत्वे सति भावनाकारणत्वाद् आत्मवत्' इति।

६. बुद्धेरात्मधर्मत्वे स्वाश्रयं विहायान्यत्र गमनं कथम्?

स्वाश्रयमपरित्यज्यैव मणिगतप्रभावत् पुष्पगतगन्धवच्च अन्यत्र गमनमिष्यते। उक्तं च यामुनमुनिभिः-

> 'आत्मप्रहाणानभ्युपगमात् अविहायैवात्मानम्
> इतस्ततश्चेतना इन्द्रियादिद्वारा निस्सरति, विच्छिन्नायाश्च
> तस्याः सन्धानासम्भवः शास्त्र एवोक्तः।'[२४] इति।

७. उपचयविरळभावाभावे कथं परिमाणान्तरयोगः?

यथा अहेः कुण्डलत्वम्, कुण्डलित्वं चोपपद्यते तथैवेह स्वाभाविकपरिमाणतारतम्यमनङ्गीकृत्यैव परिमाणान्तरयोग उपपाद्यते।

८. कथं चातीतानागतैः सम्बन्धः ?

यथा भट्टमते ज्ञातताश्रयातीतादिः, यथा वा न्यायमते अपेक्षाबुद्ध्याऽतीतादिः द्वित्वाश्रयः, तथा कालविप्रकर्षेऽपि अतीतादिः संयोगाश्रयः भवितुमर्हति । आत्मसिद्धौ, अतीतानागतयोः कथं चैतन्येन सम्प्रयोग इत्याशङ्क्य, विषयविषयि-भावप्रकाशमानत्वसङ्ख्यादियोगदवीयोदेशवर्तिज्ञानशीघ्रसंयोगप्रतिबन्दीभिः परिहृतम् । तथा 'अतीतानागततया तावद्यापि विद्येते इति तेन रूपेण बोधसन्निकर्षे नानुपपत्तिः ।'[२५] इत्युक्तम् ।

९. कथं गुणादिभिः ज्ञानस्य संयोगरूपः सम्बन्धः ?

न वयं गुणादिभिः संयोगसम्बन्धं ब्रूमः । यथा परैः संयुक्तसमवायादिः सम्बन्धोऽङ्गीकृतः, तथा संयोगिनिष्ठताऽङ्गी-क्रियते ।

१०. विषयस्य बुद्धेश्च मध्यस्थितानां सम्बद्धानामप्रकाशत्वं कथम् ?

नायनं तेज आसूर्यमण्डलं प्रसरति । मध्यस्थितपरमाण्वादीनां पदार्थानामग्रहणं यथा तथात्र भवितुमर्हति ।

११. कथं वा मुक्तबुद्धेर्युगपत् क्रमेण वाऽनन्तदेशसंयोगः ?

वेगातिशयः, शक्तिविशेषः, ईश्वरसङ्कल्पो वा कारणमिति ब्रूमः ।

१२. कथं वा व्याप्तायां स्वबुद्धिचन्द्रिकायां प्लवमानस्य स्वलालातन्तुविताने लगन्त्या लूतिकाया इव सञ्चाराधीनतत्तद्बुद्धिप्रदेशसंयोगस्य स्वबुद्ध्या सह बुद्ध्यन्तरव्यावृत्तः स्वाभाविकः सम्बन्धः ?

द्वयोरेकस्याचलत्वेऽपि अन्यस्य चलनेऽपि न सम्बन्धहानिरिति विज्ञेयम् । सदृष्टान्तमुपपादितं चैतत् न्यायसिद्धाञ्जने- 'यथा व्यापकात्मवादिनः शरीरेन्द्रियादीनाम्, यथैव ईश्वरमनुमन्यमानस्य तदीशितव्यानाम्, यथा वा लोके दासभृत्यादिद्वन्द्वानाम्, यथा च प्रभाप्रभावदादेः, यथा च

वैशेषिकादीनां चलाचलत्वेऽपि अयुतसिद्धयोरवयवावयविनोः ; यथा च अस्मत्पक्षे शरीरिणः पुरीतदादिसञ्चारेऽपि शरीराणाम्, इति व्यपगत-घनदुर्दिनो बोधभानुरौपनिषदानाम्'[२६] इति ।

ये च जीवात्मगुणा असङ्ख्याः प्रतीयन्ते ते तु धर्मभूतज्ञानावस्थाविशेषा एव । एवं ज्ञानशक्तिबलैश्वर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणा अपि ज्ञानशक्त्योर्विततिभूताः । उक्तं च यतीन्द्रमतदीपिकायाम्- 'एवं प्रत्यक्षानुमानागमस्मृतिसंशयनिर्णयविपर्ययभ्रमविवेकव्यवसायमोहरागद्वेष-मदमात्सर्यधैर्यचापल्य दम्भलोभक्रोधदर्पस्तम्भद्रोहाभिनिवेशनिर्वेदा-नन्दादयः सुमतिर्दुर्मतिः प्रीतिस्तुष्टिः पुष्टिरुन्नतिः श्रान्तिः कीर्तिर्विरक्ती रतिर्मैत्री दया मुमुक्षा लज्जा तितिक्षा विचारणा विजिगीषा मुदिता क्षमा चिकीर्षा जुगुप्सा भावना कुहनाऽसूया जिघांसा तृष्णा दुराशा वासना दुर्वासना चर्चा भक्तिः प्रपत्तिरित्येवमादयश्च जीवात्मगुणा अनन्ता धर्मभूत-ज्ञानावस्थाविशेषा एव । एवं, ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्सौशील्य-वात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्य-धैर्यशौर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणा ज्ञानशक्त्योर्वितति-भूताः ।'[२७] इति ।

५. **प्रकृतिः** - प्रकृतिस्तु सत्त्वरजस्तमोगुणात्मिका मायादिशब्दवाच्या चतुर्विंशतितत्त्वात्मिका पुराणेषु प्रथिता । तस्या एव विकृतिभूतमिदं समग्रमपि विश्वम् ।

६. **कालः** - गुणत्रयरहितः जडः कालः । क्षणादिव्यवहारहेतुः सः विभुः । भूत-भविष्यद्-वर्तमानभेदेन त्रिविधः । अखण्डकालः नित्यः, खण्डस्त्वनित्यः ।

## मुक्तिसाधनानि

मुक्तिसाधने भक्तिप्रपत्तिरूपोपायभेदेन द्वे स्तः। 'भक्तिप्रपत्तिभ्यां प्रपन्न ईश्वर एव मोक्षं ददाति। अतस्तयोरेव मोक्षोपायत्वम्'[२८]। गीतादावुपवर्णिताः कर्मयोगज्ञानयोगादयोऽपि भक्तिद्वारैव मुक्तिसाधनभूताः। तदुक्तम्- 'मोक्षोपायत्वेनोक्तानां कर्मयोग-ज्ञानयोगप्रभृतीनां भक्तिद्वारैव साधनत्वम्। ज्ञानयोगो नाम कर्मयोगान्निर्मलान्तःकरणस्य ईश्वरशेषत्वेन प्रकृतिवियुक्त-स्वात्मचिन्ताविशेषः।'[२९]। भक्तिमार्गस्तु त्रैवर्णिकानामेव। भक्तिर्नाम यमनियमाद्यष्टाङ्गयोगविशिष्टतैलधारावच्छिन्न-संस्मृतिसन्तानरूपा। अत्र सप्ताङ्गानि- विवेक-विमोक-अभ्यास-क्रिया-कल्याण-अनवसाद-अनुद्धर्षरूपाणि।

१. विवेकः - पवित्रान्नसम्पाद्या देहशुद्धिः।

२. विमोकः - कामक्रोधाद्यवशता।

३. अभ्यासः - क्रियासमभिव्याहारेण भगवच्चिन्तनम्।

४. क्रिया - श्रद्धया पञ्चयज्ञानुष्ठानम्।

५. कल्याणम्- सत्य-दया-दान-अहिंसादिसद्गुणसम्पादनम्।

६. अनवसादः - दैन्याभावः।

७. अनुद्धर्षः - साधनविषयेऽतृप्तिः।

तदुक्तम्-

'भक्तियोगो नाम यम-नियमाद्यष्टाङ्गयोगवान् तैलधारावदवच्छिन्न-स्मृतिसन्तानरूपः। स च विवेक-विमोक-अभ्यास-क्रिया-कल्याण-अनवसाद-अनुद्धर्षरूपसाधनसप्तकजन्यः।'[३०]

प्रपत्तिमार्गस्तु सर्वेषामपि भवितुमर्हति। प्रपत्तिः शरणागतिः। षड्विधेयं प्रपत्तिः सकृदनुष्ठेया। तदुक्तम्-

'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।
तदेकोपायतायाञ्चा प्रपत्तिः शरणागतिः ॥'[३१]

शरणागतिरियं षड्विधा-

१. भगवतः नारायणस्य आज्ञापालनम्

२. अवगुणपरित्यागः

३. रक्षतीत्येवं विश्वासः

४. रक्षकत्वेन भगवतो नारायणस्य वरणम्

५. कर्मफले निरासक्तिः

६. उच्चकुलजन्म-विद्या-सम्पत्त्याद्यहङ्कारकारणेषु सत्स्वपि गर्वत्यागः ।

तदुक्तम्-

**'आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।**
**आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥'[३२]**

प्रपत्तिमार्गावलम्बिनां प्रारब्धकर्मप्रतिबन्धः न विद्यत इति प्रपत्तिमार्गावलम्बनमतीव श्रेयस्करम् ।

**'साधनं भगवत्प्राप्तौ सा एवेति स्थिरा मतिः ।**
**साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते ॥**
**उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ।**
**साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥'[३३]**

जीवेषु सर्वेष्वपि भेदाङ्गीकारेऽपि मुक्तौ तारतम्यप्रतिषेध आनन्दसाम्यं च सर्वेषामङ्गीकृतम् । कर्मनिमित्तमेव हि जीवानां मानुषदेवगन्धर्वादिशरीराणि । जीवेषु देवत्वादिरूपा स्वारसिकी जातिर्नास्त्येव । ज्ञानस्वरूपं तु समेषां जीवानां समानमेव । अत एव मुक्तौ समानानन्दो वा परमात्मानन्दानुभव एव वा भवतीति विज्ञेयम् । तदुक्तम्-

अ. 'जीवात्मस्वरूपं तु देवमनुष्यादि-प्रकृतिपरिणामविशेषरूपनानाविधभेदरहितं ज्ञानानन्दैकगुणम् । तस्यैतस्य कर्मकृतदेवादिभेदेऽपध्वस्ते स्वरूपभेदो वाचामगोचरः स्वसंवेद्यः "ज्ञानस्वरूपम्" इत्येतावदेव निर्देश्यम् । तच्च सर्वेषाम् आत्मनां समानम्'[३४] इति ।

आ. 'त्रय्यन्तनिष्णातास्तु ....... अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते ।'[३५] इति च ।

एवमिह विशिष्टाद्वैतदर्शनस्य प्रधानतत्त्वानि यथामति सङ्क्षेपेण निरूपितानि । दर्शनक्षेत्रे बुद्धिस्वरूपप्रतिपादनसर्वज्ञानयाथार्थ्यसमर्थनपरमात्मानन्दानुभवरूपमोक्षप्रतिपादनेन दर्शनमिदं नैकविधवैशिष्ट्योपेतं प्रतिभाति ।

**पादटिप्पण्यः**

१. वेदार्थसङ्ग्रहः पृ. १००
२. श्रीभाष्यम् १.१.१
३. नृसिंहतापिनीयोपनिषद् ९.९.
४. श्वेताश्वतरोपिषद् ६.११
५. त्रिपाद्विभूतिमहानारायणोपनिद् ३.३
६. छान्दोग्योपनिषद् ६.३.१०
७. रामानुजदर्शनम् पृ. ७
८. यतीन्द्रमतदीपिका ३
९. यतीन्द्रमतदीपिका ४
१०. तत्त्वमुक्ताकलापः, बुद्धिसरः ३१
११. वेदान्तकारिका ८.१
१२. तत्त्वत्रयम् पृ. २६
१३. कठोपनिषद् ३.९ + ऋग् १.२.७

१४. तत्त्वमुक्ताकलापः, जीवसरः, श्लो. ६९
१५. तत्त्वमुक्ताकलापः, बुद्धिसरः, श्लो. १, पृ. २६२
१६. न्यायसिद्धाञ्जनम्, बुद्धिपरिच्छेदः, पृ. २५३
१७. न्यायसिद्धाञ्जनम्, बुद्धिपरिच्छेदः, पृ. २४९
१८. बृहदारण्यकोपिषद् ६.३.३०, पृ. ८९८
१९. बृहदारण्यकोपिषद् ६.५.१४, पृ. ९४३
२०. न्यायसिद्धाञ्जनोदाहृतं स्मृतिवचनम्, पृ. २६०
२१. बृहदारण्यकोपनिषद् १.५.३
२२. मनुस्मृतिः २.९९
२३. श्रीभाष्यम् (१.१.१, पृ. १४८, पृ. १५६)
२४. न्यायसिद्धाञ्जनम्, पृ. २६५
२५. न्यायसिद्धाञ्जनम्, पृ. २६६
२६. न्यायसिद्धाञ्जनम्, पृ. २७०
२७. यतीन्द्रमतदीपिका, पृ. १२९
२८. यतीन्द्रमतदीपिका पृ. ९४
२९. यतीन्द्रमतदीपिका पृ. ९४
३०. यतीन्द्रमतदीपिका
३१. अहिर्बुध्नसंहिता २
३२. अहिर्बुध्नसंहिता २८
३३. न्यायसिद्धाञ्जनम् पृ. ७२
३४. वेदार्थसङ्ग्रहः पृ. ५
३५. श्रीभाष्यम् १.२.१२

**उल्लिखितग्रन्थाः-**

१. तत्त्वमुक्ताकलापः, श्रीमद्वेदान्तदेशिकविहारसभा, श्रीब्रह्मतन्त्रस्वतन्त्र-परकालमठः, मैसूरु, १९७९
२. न्यायसिद्धाञ्जनम्, श्रीवैष्णवसिद्धान्तप्रचारसभा, मद्रास्, १९३४

३. यतीन्द्रमतदीपिका, चौखम्बासंस्कृतभवनम्, वारणासी, १९८९
४. बृहदारण्यकोपनिषत्, मोतीलाल् बनारसिदास्, देहली, २००७
५. मनुस्मृतिः, मोतीलाल् बनारसिदास्, देहली, १९९३
६. श्रीभाष्यम्, श्रीनरसिंहप्रियट्रस्ट्, चेन्नै, २०००
७. वेदार्थसङ्ग्रहः, अध्यात्मप्रकाशनालयः, होळेनरसीपुरम्, १९५८
८. श्वेताश्वतरोपिषद्, संस्कृत अकाडेमी, मेलुकोटे,
९. छान्दोग्योपनिषद्, संस्कृत अकाडेमी, मेलुकोटे,
१०. तत्त्वत्रयम्, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु, २००६
११. कठोपनिषद्, संस्कृत अकाडेमी, मेलुकोटे,

--------

# द्वैतदर्शनम्

डा. एच्. सत्यनारायणाचार्यः
नवीनन्यायप्राध्यापकः
पूर्णप्रज्ञविद्यापीठम्

ब्रह्मसूत्राणि, उपनिषदः, भगवद्गीता चेत्येतत्त्रयमाधरीकृत्यैव शङ्कर-रामानुज-मध्वाः स्वीयं वेदान्तसिद्धान्तं प्रत्यतिष्ठिपन्, अद्वैत-विशिष्टाद्वैत-द्वैतनाम्ना प्रथितेषु त्रिष्वेतेषु पूर्वः पूर्वः पूर्वपक्षो भवत्युत्तरस्य । आह च कण्ठरवेणैव श्रीवादिराजतीर्थः -

बौद्धजैनागमौ पूर्वपक्षौ सर्वागमस्य हि ।
ततः परस्ताज्जातेषु मतेषु च यथाक्रमम् ॥
पूर्वः पूर्वः पूर्वपक्षः यावन्मध्वमतोदयः ।
अन्ते सिद्धस्तु सिद्धान्तो मध्वस्यागम एव हि ॥[1] इति ।

**सर्वमूलग्रन्थाः-**

तत्वज्ञानप्रसारणायावनितलेऽवतीर्णो देवः समीरणो मध्व इति, आनन्दतीर्थ इति, पूर्णबोध इति, दशप्रमतिरिति च बहुधा जेगीयते स्वगुणोत्कर्षाविष्कारकैर्नामभिः । द्वैतदर्शनप्रतिष्ठापनाचार्यः सोऽयं मध्वः सप्तत्रिंशदधिकान् ग्रन्थान् प्रणिनाय । येषु विष्णुसर्वोत्तमत्व-जगत्सत्यत्व-स्वभावनित्यत्वादीन् निःशङ्कं दृढं प्रत्यपीपदन् ।

**ब्रह्मसूत्राण्यधिकृत्य चत्वारो माध्वग्रन्थाः-**

१. ब्रह्मसूत्रभाष्यम्
२. अणुभाष्यम्

३. अनुव्याख्यानम्
४. न्यायविवरणश्चेति

दश चोपनिषद्भाष्याणि ।

गीताभाष्यम्, गीतातात्पर्यनिर्णयश्चेति गीतार्थप्रकाशकौ द्वौ वेदार्थनिर्णयाय ऋग्भाष्यम् । पुराणेतिहासादिगतिसामान्यप्रदर्शनाय महाभारततात्पर्यनिर्णय-भागवततात्पर्यनिर्णय-यमकभारताख्यं ग्रन्थत्रयम् । प्रमाणप्रमेयादितत्वसिद्धये विष्णुतत्वनिर्णयः, तत्वोद्योतः, खण्डनत्रयम्, तत्वसङ्ख्यान-तत्वविवेकौ, प्रमाणलक्षणकथालक्षणे, खण्डार्थनिर्णयश्चेति दशप्रकरणानि अन्यानि च स्तोत्राणि, धर्मतन्त्राचारादिनिर्णायकप्रबन्धांश्च श्रीमध्वाचार्याः निरमासीन् । य इमे द्वैतदर्शनस्य मूलस्रोतांसि 'सर्वमूलग्रन्थाः' इति प्रसिद्धाः ।

**प्रधानग्रन्थप्रणेतारः-**

श्रीपद्मनाभतीर्थः, त्रिविक्रमपण्डिताचार्यश्च माध्वग्रन्थानां टीकां वितेनुः । तट्टीका उपजीव्य श्रीजयतीर्थमुनिः सर्वमूलेषु गूढं भावमाविष्कुर्वन् विस्तृतां सरलसुबोधाश्च टीकामाटीकयामास । वादिराजतीर्थराघवेन्द्रतीर्थप्रभृतयो विद्वत्तल्लजाः मन्दानुजिधृक्षया अप्रतिपत्तिविप्रतिपत्तिनिरसनपूर्वकं नैकान् प्रपञ्चनग्रन्थान् प्रणिन्युः । वादिदिग्दन्ती व्यासतीर्थस्तु टीकाकृद्भिर्वादावलीग्रन्थे प्रदर्शितेन क्रमेणाद्वैतसिद्धान्तस्य प्रमेयविशेषान् प्रत्येकं विमृशन् न्यायामृतग्रन्थं निर्ममे । सूत्रभावाविष्करणविषये मतत्रयस्य विमर्शां कुर्वन्तो व्यासतीर्थाः तात्पर्यचन्द्रिकाख्यं सूत्रभाष्यटीकादिभावाविष्कारकमुद्ग्रन्थश्च निर्ममिरे । यस्यास्य न्यायामृतादिग्रन्थस्य प्रभावेनाद्वैतनिरूपणप्रणाड्यां नूतनाविष्काराः सञ्जाताः ।

अद्वैतसिद्धि-न्यायामृततरङ्गिणी-गौडब्रह्मानन्दी-कण्टकोद्धाररूपा स्व-सिद्धान्तसाधनशोधनपरा ग्रन्थपरम्परा प्रादुरभवत् ।

**प्रमाणानि-**

यथार्थं प्रमाणम् । केवलानुप्रमाणभेदेन तद् द्विविधम् । प्रत्यक्षानुमान-शब्दभेदात् ज्ञानकरणं (अनुप्रमाणं) त्रिविधम् । तत्र यथार्थज्ञान-करणानि प्रमाणानि । यथार्थज्ञानमपि प्रमाणम् । तदुक्तम्- 'यथार्थं प्रमाणम् । तद् द्विविधम् । केवलमनुप्रमाणं च । यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम् ।'[२] ।

प्रत्यक्षादिजन्यं ज्ञानं सविकल्पकमेव । न तु निर्विकल्पकम् । प्रमाणाभावात् ।

प्रत्यक्षप्रमाणं सप्तविधम् । साक्षिषडिन्द्रियभेदेन । स्वरूपेन्द्रियं साक्ष्यपि प्रत्यक्षरूपं प्रमाणम् । आकाशकालादयः साक्षात्साक्षिवेद्याः । अन्ये तु ज्ञानद्वारा । तदुक्तम्-'इन्द्रियशब्देन ज्ञानेन्द्रियं गृह्यते । तद् द्विविधम् । प्रमातृस्वरूपं प्राकृतं चेति । तत्र स्वरूपेन्द्रियं साक्षीत्युच्यते । तस्य विषया आत्मस्वरूपं तद्धर्मा अविद्या मनस्तद्वृत्तयो बाह्येन्द्रियज्ञान-सुखाद्याः कालोऽव्याकृताकाशश्चेत्याद्याः । स च स्वरूपज्ञानमभि-व्यनक्ति ।'[३] चक्षुरादिषडिन्द्रियाणि इन्द्रियार्थसन्निकर्षद्वारा ज्ञान-जनकानि । मनस्तु संस्कारद्वारा स्मरणसाधनम् । यथार्थस्मृतिरपि प्रमाणम् । प्रामाण्यञ्च स्वत एव । दोषसहकारेणेन्द्रियाणि साक्षिभिन्नानि अयथार्थज्ञानजनकानि । साक्षी तु नियतयथार्थः । तदुक्तम्-

'नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरम् ।
स्वप्रामाण्यं सदा साक्षी पश्यत्येव सुनिश्चयात् ॥
ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेः ।'[४]

'साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणम् ।
न हि कश्चित् सुखाद्येषु संशयं कुरुते जनः ।
न चैवाखिलमानानि निश्चिनोत्यखिलो जनः ॥'[५]

'न परीक्षाऽनवस्था स्यात् साक्षिसिद्धे त्वसंशयात् ।
सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम् ॥'[६]

'यत् क्वचिद् व्यभिचारि स्यात् दर्शनं मानसं हि तत् ॥'[७] इति ।

प्रत्यक्षमेव जात्या प्रबलं प्रमाणम् । धर्मेश्वराद्यतीन्द्रियविषये तु आगमस्यैव जात्या प्राबल्यम् । तदुक्तम्- 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्'[८] इति ।

व्याप्तिज्ञानं समुचितदेशादौ सिद्धिश्चेति द्वयमनुमानसहकारि । न तु पक्षधर्मतानियमः । व्यतिरेक्यनुमानेऽप्यन्वयव्याप्तिज्ञानमेवानुमितिहेतुः । परानुमितिहेतौ परार्थानुमाने पञ्चावयवनियमो नास्ति । यावता विना नानुमितिस्तावदवयवाः प्रयोक्तव्याः ।

अपौरुषेयः सर्वोऽपि वेदः प्रमाणम् । उपक्रमादितात्पर्यलिङ्गैर्निर्णीतार्थक एव वेदः प्रमापकः । अन्यथा भ्रमजनकः । तात्पर्यानवगमादेव विप्रतिपत्तयः आस्तिकेष्वपि दार्शनिकेषु ।

परममुख्यया वृत्त्या सर्वोऽपि वेदः परमात्मप्रतिपादकः । तदन्यप्रतिपादकता च मुख्यया लक्षणया गौण्योपचारेण रूढोपचारेण रूढलक्षणया वा ।

वेदस्य परमात्मनि महायोगो महारूढिश्च । इन्द्रादिजगद्वाचिशब्दानां परमात्मनि महायोगः । योगार्थस्यैश्वर्यादेः परमात्मनि निरवधिकत्वात् । पुरन्दरादिगताल्पैश्वर्यस्यापि परमात्माधीनत्वाच्च । नारायणादिशब्दानां तु महायोगरूढिः ।

शक्तिश्च योग्येतरान्विते स्वार्थे व्यक्तावेव । न तु जातिविशिष्टे । गौरवात् । जातिभानश्चाविना भावात् । तात्पर्यज्ञानादिकश्चान्वयबोधे नियामकम् ।

**विश्वसृष्टिः-**

जगत्सृष्ट्यादिकर्तृत्वं भगवतो लक्षणम् । सृष्ट्यादिज्ञानश्च तारतम्यज्ञापकम्, मोक्षहेतुभगवदुत्कर्षज्ञानप्रसादादिसाधकश्च । अत एव पुराणादिषु बहुश उच्यते सृष्ट्यादि । तदुक्तं वामने-

'सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम् ।
तारतम्यपरिज्ञाने महातात्पर्यमिष्यते ।
अतस्तद्बहुशस्तूक्तमन्यच्चैतत्प्रकाशकम् ॥'[१] इति ।

अयं तावत् सृष्टिक्रमः - परमात्मनः प्रलयान्ते सिसृक्षा भवति । ततः प्रकृतिं प्रविश्य क्षोभयति । ततो गुणत्रयात्मना विभजति । ततो महत्तत्वमहंकार इत्यादिक्रमेण तत्त्वानि तदभिमानिब्रह्मादिदेवांश्च सृजति । तत्त्वेषु प्रविश्य ब्रह्माण्डं सृजति । इयं ब्रह्माण्डाद्बहिः सञ्जाता प्राकृतसृष्टिः । इतः परं वैकृतसृष्टिः अण्डान्तर्भवति ।

परमात्मा चेतनाचेतनांशानुदरे निधायाण्डं प्रविशति । ततो द्विवर्षसहस्रान्ते स्वनाभितः पद्मं जनयति । तच्च पद्ममाद्यब्रह्मणः प्रथमपरार्धान्ते जायते । तत्पद्मे चतुर्मुखोऽजनि । चतुर्मुखतपसा प्रसन्नो भगवान् ब्रह्मणि ब्रह्मरूपः सन् चतुर्दशभुवनादीन् सृजति । पुनः सर्वे देवा अण्डान्तर्जायन्ते ।

नानारूपैर्जगत्प्रविश्य जाग्रदाद्यवस्थाभिः पोषणं भगवतः स्थिति-कर्तृत्वम् । संहारस्तु लयः । उत्पत्तिक्रमेणैव तत्त्वानि लयं यान्ति । सर्वस्य

प्रलये नारायणस्य प्रकृतेश्चावस्थानं भवति । तदा लक्ष्म्यात्मके महोदके वटपत्रे शून्यनामा नारायणः शेते । सर्वेऽपि जीवास्तदुरं प्रविशन्ति । सृष्टेः प्राक् प्रलयानन्तरञ्च नारायणस्यैव स्वातन्त्र्येणावस्थानात् नारायण एव सकलदेवोत्तमत्वेन सिद्धः । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः'[१०] इति स्मृतिः, 'सदेवेदमग्र आसीत्'[११] इति श्रुतिश्च नारायणस्य सर्वोत्तमत्वाकूतिनिर्भरा भवति ।

**सिद्धान्तप्रमेयाः-**

**हरिः सर्वोत्तमः**

'एको देवः सर्वभूतेषु गूढः'[१२] इति श्रुत्युक्तः एक एव नारायणः सर्वान्तर्यामी देवः । स चानन्तगुणपरिपूर्णः । जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणः । दोषगन्धविदूरः । स्वरूपगुणावयवक्रियादिभिरत्यन्ताभिन्नः । परममुख्यया वृत्त्या सर्वशब्दवाच्यः । सृष्ट्याद्यष्टकर्ता च । 'एको रुद्रो न द्वितीयाय तस्थे' 'हिरण्यगर्भः समवर्तताग्रे'[१३] इत्यादिषु रुद्रहिरण्यगर्भादिशब्दाभिधेयत्वस्य विष्णावेव मुख्यत्वात् नात्र परस्परं विरोधः । तदुक्तम्-

'अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् ॥[१४]

'मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ॥[१५]

'इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।
शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ॥[१६]

नारायणस्य कल्याणगुणपूर्णतासिध्यर्थमेव प्रामाणिकत्वाच्च जगत्सत्यत्वादयोऽन्ये प्रमेया अभ्युपगन्तव्याः । ते च

'श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भेदो (भिन्नो) जीवगणा हरेरनुचरा नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥'

इति श्लोके प्रायशः समगृह्यन्त ।

लक्ष्मीनारायणौ नित्यमुक्तौ । देशकालाभ्यां परमात्मना समव्याप्ताऽपि लक्ष्मीः भगवतः सकाशाद् अनन्तगुणहीना । परमात्ममात्राधीना जडदेहरहिता दोषरहिता च ।

**जीवस्वरूपम्**

संसारकाले अज्ञानादिदोषयुक्ता जीवाः । तदुक्तम्-

'अतःपरं यदव्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ॥'[१७]

'एकं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम् ।
एष चेतनया युक्तः जीव इत्यभिधीयते ॥[१८]

ते च त्रिविधाः । मुक्तियोग्या नित्यसंसारिणस्तमोयोग्याश्चेति । तदुक्तम्-

'सात्त्विका राजसाश्चैव तामसास्त्रिविधाः जनाः ।
सात्त्विकास्तत्र देवाद्याः राजसाः सृष्टिगास्तथा ॥
मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः ।
स्वरूपभूतविद्वेषा अधो गच्छन्ति ते तमः ॥[१९]

सर्वेऽपि जीवा परस्परं परमात्मना च भिन्नाः । संसारे मुक्तौ च तारतम्योपेताः । महत्तत्वाभिमानी ब्रह्मा सर्वजीवोत्तमः । वायुश्च तत्समः।

वायोः जीवोत्तमत्वं 'अहमुक्थमस्म्यहमुक्थमस्मीति'[२०]त्याद्युपनिषत्सु पौनःपुन्येन प्रत्यपादि ।

**मुक्तिसाधनानि-**

अनाद्यविद्याकामकर्मादिनिमित्तः परमार्थो बन्धोऽपि परमात्माधीनः । बन्धास्तु- ईश्वरेच्छा, अविद्या, लिङ्गशरीरं, काम्यं कर्म, त्रिगुणात्मकं मनः, स्थूलशरीरमित्यादि । तन्मोक्षोऽपि परमात्माधीनः । तथाहि- शमदमादिसम्पन्नेन मुमुक्षुणा भक्त्या क्रियमाणः श्रवण-मनन-निदिध्यासनादिः भगवत्प्रसादं जनयति । प्रसन्नो नारायणः स्वात्मानं प्रदर्शयति । अव्यक्तस्वभावो हरिः विना तत्प्रासादं न कथङ्कारमपि द्रष्टुं शक्यः । भगवत्प्रसादलब्धेनापरोक्षज्ञानेन कर्मक्षयो जायते । सञ्चितानि भस्मीभवन्ति । आगामिनां लेपाभावः सिध्यति । प्रारब्धकर्म केवलं शिष्यते । तस्योपभोगेनैव क्षयः । अपरोक्षज्ञानानन्तरं परमभक्तिर्जायते । ततोऽत्यर्थप्रसादः । अस्मादेव परमप्रसादादविद्याप्रकृतिभ्यां विमुच्यते । 'यस्य प्रसादात्परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण'[२१] इत्यादि-श्रुतिसङ्घस्यायमेवाभिप्रायः । 'दृष्ट्वैव तं मुच्यते'[२२] इत्यवधारणं तु दर्शनस्यात्यन्तायोगं व्यवच्छिनत्ति ।

इत्थञ्च श्रवणादिजनितापरोक्षज्ञानसम्भूतात् परमात्मपरमप्रसादादेव मोक्षः । तदुक्तम् -

'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते ।।'[२३] इति ।

**मोक्षस्वरूपम्-**

मोक्षस्तु अस्वरूपस्य त्यागेन स्वरूपेण स्थितिः ।

'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ।।'[२४]

इति भागवतोक्तेः ।

स चतुर्विधः कर्मक्षयः उत्क्रान्तिः अर्चिरादिमार्गो भोगश्चेति । कर्मक्षयस्त्वपरोक्षज्ञाने जाते सञ्चितस्य सर्वस्यापि अनिष्टपुण्यस्य पापस्य च सर्वात्मना विनाशः इत्युक्त एव । अत्र विनाशो नाम अनिष्ट-पुण्यस्य कस्यचित् सुहृद्भ्योऽनवाप्तापरोक्षेभ्यो दानम् । पापस्य च कस्यचिद् द्वेषिभ्यो त्यागः । इदं न सर्वेषामपरोक्षिणाम् । नापि सर्वेषां पापानाम् । केषाञ्चित् पापानां स्वरूपत एव नाशः ।

प्रारब्धानुभवानन्तरं ब्रह्मनाड्या देहादुत्क्रामन्ति । सुषुम्नापरनाम्नी ब्रह्मनाडी मूलाधारादारभ्य मूर्धपर्यन्तमृजुरूपेण देहे वर्तते ।

देहान् उत्क्रान्तो ज्ञानी वायुप्रदर्शितमार्गः प्राज्ञेनान्वारूढः अर्चिरादि-मार्गेण गच्छति । तत्र तत्र लोकेषु पूज्यते । ततः क्रमेण वैकुण्ठलोकं प्राप्य तुरीयनामकभगवन्तमाप्नोति । सैषा अप्रतीकालम्बनानां गतिः ।

प्रतीकालम्बनानां त्वन्तकाले नियमेन भगवत्स्मरणं भवति । सुषुम्ना-पार्श्वनाड्या तेषां गमनम् । ततो अर्चिरादिमार्गेण वायुं प्राप्नुवन्ति । वायुरेव सत्यलोकं नयति । चतुर्मुखश्च कल्पान्ते स्वशरीरलयानन्तरं वैकुण्ठं नयति ।

इदमुभयमपि मानुषाणामेव । देवानां तु नोत्क्रमणं न वाऽर्चिरादि-मार्गः । किन्तूत्तमेषु लय एव । उत्पत्तिक्रमेण लयानन्तरमेव तेषां परमात्मनि लयः । अयमेव तेषां मोक्षः ।

तत्र भगवल्लोके सारूप्यसालोक्यसायुज्यसामीप्यवन्तो मुक्ताः स्वरूप-भूतं सुखमनुभवन्ति । मुक्तिर्नैजसुखानुभूतिः ।

**उपसंहारः-**

'तत्त्ववादः' इति द्वैतसिद्धान्तस्य प्रत्नं नाम । जगतः सत्यत्वेन जगति

कर्तव्यस्य कर्मणो भारः साधकस्य शिरसि निधीयते । परमात्मनश्च सत्यत्वेन पारत्रिकसाधनाय प्रेर्यते । ऐहिकेऽमुष्मिके चोभयत्रापि प्रवृत्त्युन्मुखीभवने दृश्यस्यादृश्यस्य चोभयस्यापि सत्वदार्ढ्यमपेक्ष्यते । अत एव दृश्यस्यैव सत्यत्ववादिनां चार्वाकानां मते दृश्यत्वादेव मिथ्यात्वं वदतां वेदान्तिनाञ्च मते ऐहिकस्याऽमुष्मिकस्य वैकस्य त्यागः साधकस्य समुन्मिषेदिति दोषः पतति । स्वतन्त्रं परतन्त्रञ्चेति द्विविधं तत्वमिति वदन्तस्तत्ववादिनोऽत्र तत्र च जयन्ति । तदुक्तम्-

अ. 'स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुः .......... ॥'

(तत्त्वसङ्ख्यानम्, १)

आ. 'य एतत् परतन्त्रं तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥'

(तत्त्वसङ्ख्यानम्, अन्तिमपद्यम्)

**पादटिप्पण्यः**

१. युक्तिमल्लिका-१, ७.८.
२. प्रमाणलक्षणम्
३. प्रमाणलक्षणम् पृ. १२६
४. ब्र.सू.अनु. ३.४.५
५. ब्र.सू.अनु. ३.४.५
६. ब्र.सू.अनु. ३.४.४, श्लो. १४२
७. ब्र.सू.अनु. ३.४.५, श्लो. १४३
८. वि.त.नि.
९. भागवततात्पर्यम्- ३.२१.१२
१०. ब्र.सू.भा.उदा.श्रुतिः

११. ब्र.सू.भा.उदा.श्रुतिः
१२. ब्र.सू.भा.उदा.श्रुतिः
१३. ब्र.सू.भा.उदा.श्रुतिः
१४. ब्र.सू.भा.
१५. स.शा.सं. १-५
१६. स.शा.सं. १-७
१७. भाग. १.३.७२
१८. भाग. ४.२९.७६
१९. तत्त्वसङ्ख्यानकाशिका
२०. छा.उ.
२१. वि.त.नि.उदा.श्रुतिः
२२. आ.उ.
२३. अनुव्याख्यानम्
२४. भाग. २.१०.६

# शोधप्रबन्धप्रदातारः

| | |
|---|---|
| साङ्ख्यदर्शनम् | डा. के. विश्वनाथशास्त्री<br>Asst. Professor,<br>Dept. of Advaita Vedanta,<br>Rashtriya Sanskrit Vidyapeetha,<br>Tirupati - 517501 (A.P.) |
| योगशास्त्रस्य प्रधानग्रन्थकाराः | वि.विजयसिंहः सि.वि.<br>Poornaprajna Vidyapeetha<br>Katriguppa Main Road,<br>Bangalore-560028 |
| न्यायदर्शनम् | डा. शङ्करनारायण अडिगः<br>Deputy Director<br>Poornaprajna Samshodhana Mandiram<br>Katriguppa Main Road,<br>Bangalore-560028 |
| वैशेषिकदर्शनम् | डा. रङ्गनाथ कट्टि<br>Deputy Director<br>Poornaprajna Samshodhana Mandiram<br>Katriguppa Main Road,<br>Bangalore-560028 |
| मीमांसाशास्त्रपरिचयः | के. इ. देवनाथन्<br>Professor & Head<br>Dept. of Vishishtadvaita Vedanta,<br>Rashtriya Sanskrit Vidyapeetha,<br>Tirupati - 517501 (A.P.) |

अद्वैतदर्शनं
विशिष्टाद्वैतदर्शनं च

डा. ए.वि. नागसम्पिगे
Director
Poornaprajna Samshodhana Mandiram
Katriguppa Main Road,
Bangalore-560028

द्वैतदर्शनम्

डा. एच्. सत्यनारायणाचार्यः
Dept. fo Naveena Nyaya
Poornaprajna Vidyapeetha,
Katriguppa Main Road,
Bangalore-560028

# षड्दर्शनसारः




प्रकाशनम्

पूर्णप्रज्ञसंशोधनमन्दिरम्

पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८






२०१२

Design: JAHNAVI